इति कोशा(१)त्। "गाङ्कुटादिभ्यः" इत्यादिसूत्रस्थकुटपदं वा दृष्टान्तः। कुटादौ=कुटादिस्थले, यद्बहुव्रीहिवाक्यं तत्स्वाविषयेऽपि व्यवहारं प्रयोजयतीति योजना; न तु(२)सप्तम्योः सामानाधिकरण्यम्॥ ननु, स्वाविषये स्वस्मिन् ज्ञानं व्यवहारप्रवर्तकमित्यत्रापि तत्राऽद्वैतवादिनो न दृष्टान्तोऽस्ति, दृष्टान्तस्य व्यवहारस्य च ब्रह्मगोचरस्याऽनभ्युपगमादित्यत आह—। d."अविद्ये"ति॥

मू० "तदेवं यद्यदन्यत्र(३)दृष्टवैधर्म्यं स्वप्रकाशे पर्य्यवसास्यति तत्सर्वमन्यथानुपपत्तिरेव स्वप्रकाशसाधकतया प्रदर्शिता स्वीकारयिष्यति। b.तद्यथा—अन्यो ज्ञाताऽन्यश्च ज्ञेय इत्यन्यत्र दृष्टमहमिति व्यवहारान्यथानुपपत्त्या त्याज्यं; तथाऽन्यज्ज्ञानमन्यज्ज्ञेयमिति जानामीति व्यवहारान्यथानुपपत्त्या त्याज्यं; c.सर्वतो बलवती ह्यन्यथानुपपत्तिस्तथादृष्टतामात्रबलमवलम्ब्य प्रवृत्तं तर्कशतमपि बाधते।

टी० ननु, कुटादावपि तद्गुणसंविज्ञानबहुव्रीहेरनुशासनबलाल्लक्षणया, शक्त्या वा, कुटोऽपि विषय एव; तथाच व्यवहारानुरोधात्स्वप्रकाशेऽपि कर्मक्रियाभावो विषयविषयिभावो वाऽवश्यमङ्गीकर्त्तव्यः, स चाऽभेदे सर्वथानुपपन्न इति कथं स्वप्रकाशत्वम्?। न च दृष्टान्तमात्राविष्टसिद्धिः;इति प्रमाणं किंचिदावश्यकमत आह—। a."तदेवमि"ति। ज्ञानस्य ज्ञानान्तरप्रकाश्यत्वेऽनवस्था, शेषासिद्ध्या सर्वासिद्धिरनिर्मोचापत्तिश्चेत्यन्यथानुपपत्त्या स्वप्रकाशताऽवश्यमङ्गीकर्त्तव्या, सा च यावता विना न सिद्ध्यति तावदवश्यमङ्गीकर्त्तव्यम्; अतो विषयविषयिभावं क्रियाकर्मभावं वा कथमद्वैतेऽप्यर्थो-

(१) का. २। वैश्य व.। श्लो. ३२।

(२) अस्मिन्द्वितीयवर्णके "स्वाऽविषये" "कुटादावि"ति सप्तम्योः पूर्ववर्णके प्रदर्शितसामानाधिकरण्यवत्सामानाधिकरण्यं नेत्याह-नत्विति।

(३) अन्यत्र = लोके कर्मक्रियाभावो विषयविषयिभावो वा भेदे दृष्टस्ततो वैधर्म्यं ज्ञानस्य स्वप्रकाशत्वेऽभेदे कर्मक्रियाभावादिः।

पत्तिर्न साधयिष्यतीत्यर्थः ॥ ननु, यदन्यत्रादृष्टं तदप्यन्यथानुपपत्तिः यतीत्यप्यदृष्टमेवेत्यत आह—। [b]"तद्वये"ति। ज्ञातुर्ज्ञेयत्वं, ज्ञानस्य त्वमन्यत्रादृष्टचरमप्यहमिति व्यवहारान्यथानुपपत्त्या, जानामीति व्यव रान्यथानुपपत्त्या च, त्वयाभ्युपेयते, तथा प्रकृतेपीत्यर्थः ॥ नन्वन्यथानुप कथमयं महिमा? कथं वाऽन्यथानुपपत्तिरेव दृष्टेन न बाध्यते? इत्यत आ [c]"सर्वत"इति। यदि तज्ज्ञानं क्रिया स्यात्तदा कर्म न स्यात्, यदि स्यात्तदा विषयि न स्यात्, यदि स्वं न विषयीकुर्यात्तदा स्वस्मिन् हारं न प्रवर्तयेत्—इत्यादितर्कशतमप्यन्यथानुपपत्तिबाध्यमेव, नतु क्मित्यर्थः ॥

मू० "तदिदमाहुः,—"प्रमाणवन्त्यदृष्टानि कल्प्यानि हून्यपि"(१)इति। [b]तस्मात्—

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका।
पिनष्टि दृष्टवैमत्यं(२)सैव सर्वबलाधिका ॥ ६ ॥
बाध्यान्यथोपपत्तिर्वा त्याज्यो वा दृष्टताऽऽग्रहः
नह्येकत्र समावेशश्छायाऽऽतपवदेतयोः ॥ ७ ॥

[c]तदित्थं त्वदङ्गीकृतसद्विचारलक्षणोपपन्नैरेवंविधै चारैः स्वप्रकाशता भवता सुप्रतिपदा; [d]अस्मा संवेदनबलादेव स्वतःसिद्धरूपं विज्ञानमास्थीयते।

टी० ननु, तवैवं प्रौढिमात्रं नतु प्रमाणिकानामिदमनु आह—। [a] "तदिदमि"ति । यत्रादृष्टे प्रमाणं प्रवर्तते तददृष्टमपि ( ज्ञानम्; अशरीरी कर्त्ता; सुखदुःखात्यन्ताभाववानात्मा; निःस्पर्शं मूर्त मनः; जातमप्यविनाशि, यथाध्वंसः; अनुत्पन्नमपि विनाशि, यथा प्राग स्वयमेव स्ववृत्ति, यथा प्रमेयत्वं) प्रामाणिकैरभ्युपगम्यते इत्यर्थः।

(१) "अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणकः"—इत्युत्तरार्द्धम्।
(२) दृष्टवैमत्यं = प्रत्यक्षविरोधं, पिनष्टि = परिहरतीत्यर्थः।

पत्तेरन्यथोपपत्तिमात्रं बाधकं, प्रकृते तु सा नास्त्येवेत्यनुक्तेरित्यर्थः ॥ उक्तमर्थं श्लोकद्वयेन संगृह्णाति—। [b]"तस्मादि"ति ॥ नन्वर्थापत्त्या स्वप्रकाशतासिद्धावपि द्वैतं तदवस्थमेव, स्वप्रकाशज्ञानभिन्नाया अर्थापत्तेर्विचारस्य चैतादृशस्य त्वयाप्यभ्युपगमादित्यत आह—।[c] "तदित्यर्थमि"ति। नेयमर्थापत्तिर्न चायं विचारो मयाभ्युपेयते किंतु त्वदभ्युपगमेन त्वं बोध्यसे इति न द्वैतापत्तिरित्यर्थः ॥ तर्हि स्वप्रकाशज्ञानसिद्धिरपि कथं तवेत्यत आह—। [d]"अस्माभिरि"ति। यद्यपि तदेव ज्ञानं(१)प्रकाशकं, प्रकाश्यम्, अभ्युपगन्तव्यम्, अभ्युपगमः, अभ्युपगन्तृ(२), स्वप्रकाशत्वेन परबोधनं, बोध्यश्च परः, बोधकं वचनं चेति संकलयता महासाहसिकत्वमसंकलयतश्च द्वैतापत्तिस्तथापि प्रपञ्चबाधाया वक्तव्यतया तथैव पर्य्यवसास्यतीति हृदयम्। यद्यपि यत्स्वप्रकाशं ज्ञानं त्वयाभ्युपगतं तस्य सर्वोऽयं प्रपञ्चः, स्वं च विषय इत्यस्तु, तथाच तद्विषयतया न प्रपञ्चमिथ्यात्वं, नाप्यद्वैतं, प्रपञ्चस्यैव सत्त्वात्; नापि तादृशे(३)तत्र प्रमाणान्तरापेक्षा, स्वतः सिद्धत्वात्; नाप्यस्माकमपसिद्धान्तः, ईश्वरज्ञानस्य तादृशस्यास्माभिरभ्युपगमात्; नापि ज्ञानस्य ज्ञानान्तरवेद्यतापक्षोक्तदोषः, तेनैव सर्वविषयकेण सर्वदोषनिरासात्; तथाच स्ववधाय कृत्योत्थापनमेतत्—स्वप्रकाशज्ञानसाधनम्। *तस्य प्रपञ्चो विषय इत्यत्र किं प्रमाणम्*?—इति चेत्, प्रपञ्चविषयतायामपि तस्यैव ज्ञानस्य प्रमाणत्वात्; त्वन्मते स्वप्रकाशतायामिव। अस्माकं तु तद्भिन्नमपि धर्मिग्राहकं(४)प्रमाणमस्ति, न च तज्ज्ञानविषयीकृतं(५)प्रपञ्चं खण्डनयुक्तयोऽप्यपनेतुमीशते, सुदृढप्रमाणसिद्धत्वात्। तस्मात्,—"त्वया निर्म्माय दत्तेऽस्मिन् स्वप्रकाशैकमन्दिरे। न्यासीकृतः प्रपञ्चोऽयं नापह्नोतुं तवार्हति। प्रकाशपाशबद्धानां प्रपञ्चानां विमोचने। प्रभवन्तु स्वयं बाध्याः

(१) तदेव ज्ञानं प्रकाशकप्रकाश्याद्यष्टविधरूपेण व्यवस्थितं विचारयता महासाहसिकत्वमित्यन्वयः।

(२) 'अभ्युपगन्ता चे'त्यपि क्वचित्पाठः। (३) तादृशे = स्वप्रकाशज्ञाने।

(४) ईश्वरप्रवृत्तिर्ज्ञानप्रयोज्या प्रवृत्तित्वादस्मदादिप्रवृत्तिवत्क्रियाकारकमीश्वरज्ञानलक्षणधर्मिसाधकमनुमानमेवेश्वरज्ञाने प्रपञ्चविषयकत्वमपि प्रसाधयिष्यतीत्यर्थः।

(५) ईश्वरज्ञानविषयीकृतमित्यर्थः।

कथं खण्डनयुक्तयः” तथापि प्रपञ्चखण्डनयुक्तयस्त्वया बाधितुमश
इति हृदयम् ॥

मू० “एवं च सति सौगतब्रह्मवादिनोरयं विशेषो
दिमः सर्वमेवानिर्वचनीयं वर्णयति (तदुक्तं भग
लङ्कावतारे [१]–“बुद्ध्या विविच्यमानानां स्वभा
नावधार्यते । अतो निरभिलप्यास्ते निःस्वभाव
देशिताः[२]” इति) ‘विज्ञानव्यतिरिक्तं पुनरिदं
सदसद्भ्यां विलक्षणं ब्रह्मवादिनः संगिरन्ते । तथा
नेदं सद्भवितुमर्हति, वक्ष्यमाणदूषण[३]ग्रस्तत्वा
नाप्यसदेव, तथा सति लौकिकविचारकाणां[४]
व्यवहारव्याहत्यापत्तेः । यदपि ‘निर्वक्तुमसामर्थ्य
व उपास्यन्तां येभ्यो निरुक्तयः शिक्ष्यन्ते’–इत्यु
म्भवचनं तत्तदा शोभेत यदि मेयस्वभावाऽनुगा
नीयमनिर्वचनीयतेति न ब्रूयुः, वक्तृदोषादिति
वदेयुः । “यस्तु वादी निरुक्त्यभिमानं धत्ते स निर्व
नतु शक्ष्यति, वक्तव्यदोषात्[५] ।

टी० ननु, यदि विचारोऽपि त्वया नाभ्युपेयते तदा माध्य
तप्रवेशात्तवापि दर्शनमदर्शनमेवेत्यत आह–। ““एवं चे”ति । आदि
सौगतः, भगवता=बौद्धेन [६], समन्तभद्रो भगवान्मारजिल्लोकजि

(१) विद्यासागरास्तु “अलङ्कारावतारे”–इति पाठं व्याचक्षते ।
(२) देशिताः=उपदिष्टाः सन्तः । [ मासादि
(३) लक्षणाधीना हि लक्ष्यव्यवस्थितिर्लक्षणानि चाऽनुपपन्नानीत्यादिदू
(४) लौकिकविचारकाणां, लौकिकानां परीक्षकाणां चेत्यर्थः ।
(५) भेदप्रपञ्चस्य स्वतः परतो वा सिद्ध्यसम्भवरूपाद्वक्तव्यदोषात्,
मेन प्रतिपक्षोपाधेर्वा बाधरूपाद्वा ।
(६) अत्र ‘बुद्धेन’–इति पाठस्समुचितः । ‘बौद्धेन’–इति पाठे तु बुद्ध
बौद्ध इति कथञ्चिद्व्याकरणीयम् ।

न"—इति कोशात्; लङ्कावतारस्तदागमग्रन्थः ॥ [b]"बुद्धे"ति। यथा बुद्ध्यतिरिक्तः पदार्थो बुद्ध्या विविच्यमानो विचारं न सहते तथा बुद्धिरपि विविच्यमाना विचाराऽसहत्वान्निरभिलप्या=अनिर्वचनीया, निःस्वभावा=असतीत्यर्थः (१) ॥ सौगतदर्शनात् स्वदर्शनं भिनत्ति—। [c]"विज्ञानव्यतिरिक्तमि"ति। 'भवितु(२)मर्हति'—इत्यधिकमपि लौकिकमनुरुद्ध्योक्तम्। मेयस्यायं स्वभावो यदस्य निर्वचनमशक्यं न तु निर्वक्तुः(३); स च तदा स्याद्यदि कोपि शक्नुयान्निर्वक्तुं, येपि गुरव उपासनीयास्तेपि निर्वक्तुमकुशला एवेत्यर्थः ॥ त्वमपि गुरुर्भूत्वा मां शिक्षय यदि पारयसीत्याह—। [d]"यस्त्व"ति॥

मू० *[a]नच ते दोषाः स्वकमपि घ्नन्तो जातयः कथं न स्युरिति वाच्यम्*, [b]यतो निर्वचनीयत्वं बाध्यते तैर्दोषैः स्वयमप्यनिर्वचनीयैरेव, अनिर्वचनीयैरेव च तैर्व्यवह्रियते एवेति कुतोऽस्मान् प्रति व्याघातः स्यात् [c]तज्जातित्वस्य च निरुच्य योजयितुमशक्यत्वात्। * [d]ननु "सदसत्पक्षयोर्दोषदर्शनादनिर्वचनीयता"—इति ब्रुवाणस्य किं सदसत्त्वसंशयः? किं वा सदसत्त्वपक्षबहिर्भावाभ्युपगमः? [e]आद्ये भवितव्यं तावत्सदसत्त्वयोरन्यतरेणेत्येकपक्षदोषस्याभासत्वं, [f]तच्च सत्त्वपक्षदोषस्यैवाऽभ्युपेयमावश्यकत्वात्।

टी० ननु(४)"वक्ष्यमाणदूषणग्रस्तत्वात्"—इत्ययमपि हेतुर्वक्ष्यमाणदूषणग्रस्त एव, तथाच स्वव्याघातकतया जात्युत्तरमेतत्; यथा(५)'नेदं

(१) बुद्धेर्निःस्वभावत्वोपवर्णनं भावार्थो नत्वक्षरार्थः।

(२) ननु मूले "नेदं सद्भवितुमर्हति"—इत्यत्र "नेदं सत्"—इत्येव पर्याप्तं किं भवितुमर्हतीत्यधिकोक्त्या, अर्थाऽव्यतिरेकात्पुनरुक्तेश्चेति तत्राह—भवितुमिति ॥ "लौकिकम"ति, लोके धार्यं धारितं, ग्राह्यं गृहीतम्, इत्यादौ यथा पुनरुक्तिर्न दोषस्तद्वदिहापीति भावः।

(३) 'न तु निर्वक्तुः"—इत्यत्र 'स्वभावः'—इत्यनुवर्त्यते, निर्वक्ता चात्र सदोषपुरुषेन न "यदि कोपि शक्नुयात्"—इत्यग्रिमग्रन्थासङ्गतिः।

(४) न्यायाऽलङ्कारग्रन्थयोरनिर्वचनीयतादूषणं यदभाणि तदनुवदति—नन्विति।

(५) जात्युत्तरमेवोदाहरति—'यथा नेदम्' इत्यादिना। इदं = धूमलक्षणं साधनं,न

साधकं, सर्वथाऽनुपलभ्यमानोपाधिशङ्काग्रस्तत्वात्'–इत्यादि; ... दोषाणामपि बाध्यत्वं, तदा प्रपञ्चः कथं बाध्यतां तैरित्याशङ्क्ते–। "... ति ॥ बाध्यैरेव दोषैर्जगद्बाध्यमित्यङ्गीकृत्य प्रवृत्तं मां प्रति न स्वव्या... तदोषावकाश इत्याह–। [b]"यत"इति ॥ ननु, स्वव्याघातकं दोषं प्र... नस्त्वं जातिवादी निरनुयोज्यानुयोगेन निग्रहस्थानेन निगृहीत इति ... मस्माभिरित्यत आह–। [c]"तज्जातित्वस्ये"ति । वक्ष्यमाणदोषैर्जाति... णामपि निर्वक्तुमशक्यमेवेति जातित्वमव्यवस्थाप्याहं निगृहीतुम... इत्यर्थः ॥ यथा, शब्दे नित्यत्वानित्यत्वयोर्द्वयोरपि दोषदर्शनादु... टिकः संशयस्तथा प्रपञ्चे सत्त्वासत्त्वयोर्दोषदर्शनात्संशयो वा? कोट... राभ्युपगमो वा?–इति विकल्प्य सत्त्वपक्षधौव्यं (१) शङ्कते–। [d]"नन्वि... [e]"आद्ये"इति । परस्परविरहस्वभावकोटिकसंशयधर्मिणा एककोट... कत्वावश्यकत्वात् तस्यां वास्तव्यां कोटौ दोषा नूनमाभासा इत... [f]"तच्चे"ति । आभासत्वमित्यर्थः ॥

मू० "यदि तावत्सत्त्वपक्षस्तदा सत्त्वपक्ष दोषः"कथं संगच्छ... [c]अथाऽसत्त्वपक्षस्तदा सर्वासत्त्वे तद्दोषः कथं सद्भाव... भवितुं प्रभवेत्। [d]द्वितीयस्तु व्याघातादेवाऽसं... "परस्पर(२)विरोधे हि न प्रकारान्तरस्थितिः" इति... तदेतदनाकलितपराभिसन्धेः प्रत्यवस्थानम्।'यो हि... मनिर्वचनीयसदसत्त्वं (३) ब्रूते स कथमनिर्वचनीयता... व्यवस्थितौ पर्य्यनुयुज्येत, सापि हि कृत्स्नप्रपञ्चपरा...

वन्हिलक्षणसाध्यसाधकं, सर्वथाऽनुपलभ्यमानोपाधिशङ्काग्रस्तत्वादित्युक्ते भवति ... स्यापि "सर्वथाऽनुपलभ्यमानोपाधिशङ्काग्रस्तत्वात्"–इत्यस्य हेतोर्व्याघातः, तस्या... लक्षणसाधनवत्सर्वथाऽनुपलभ्यमानोपाधिशङ्काग्रस्तत्वात्; अत एव च व्या... घातकमसदुत्तरं जातिरि"ति वचनात् ।

(१) 'सत्पक्षधौव्यम्'–इत्यपि क्वचित्पाठः ।

(२) कुसमाञ्जलावुदयनोक्तं व्याघातमेवोपपादयति–परस्परेति । "नै... विरुद्धानामुक्तिमात्रविरोधतः"–इत्युत्तरार्द्धम् ।

(३) अनिर्वचनीये–निर्वचनानर्हे, सत्त्वासत्त्वे यस्य तदनिर्वचनीयसद...

न्दाभिधेयमध्यनिविष्टैव। [f]परस्यैव व्यवस्थयैवं पर्य्यवस्यति–निर्वचनप्रतिज्ञेपादनिर्वचनीयत्वं, विधिनिषेधयोरेकतरनिरासस्येतरपर्य्यवसायितया [g]स्तेनाभ्युपगमात्। [h]ततः परकोयरीत्येदमुच्यते,–'अनिर्वचनीयत्वं विश्वस्य पर्य्यवस्यति' इति। [i]वस्तुतस्तु, वयं सर्वप्रपञ्चसत्त्वाऽसत्त्वव्यवस्थापनविनिवृत्ताःस्वतः सिद्धे चिदात्मनि ब्रह्मतत्त्वे केवले भरमवलम्ब्य चरितार्थाः सुखमास्महे।

टी० आवश्यकत्वमेवाह–। [a] "यदि तावदि"ति॥ [b] "कथमि"ति पारमार्थिकत्वदुष्टत्वयोरेकत्रासंभवादित्यर्थः॥ असत्त्वपक्षेपि सत्त्वपक्षदोषस्याभासत्वमुपपादयति–। [c]"अथे"ति। तद्दोषः–सत्त्वपक्षदोषः॥ [d]"द्वितीय"इति। सदसत्त्वपक्षबहिर्भाव इत्यर्थः॥ मदभिमतायामनिर्वचनीयतायां विकल्प्य दोषाभिधानं प्रकारान्तरेण ([1])निर्वचीयतायाः सत्त्वव्यवस्थित्यै त्वया कृतं, सोयं दोषाभिधानलक्षणः पर्य्यनुयोगो न मयि घटते, यतोऽनिर्वचनीयताख्यस्यापि धर्मस्याऽनिर्वचनीयतैव मदभिमतेत्याह–। [e]"यो ही"ति॥ ननु, यद्यनिर्वचनीयता न त्वया व्यवस्थापनीया तदा कथं व्यवतिष्ठेतेत्यत आह–। [f]"परस्ये"ति॥ [g]"तेने"ति। परेणेत्यर्थः॥ [h]"तत"इति। अनिर्वचनीयत्वं मया न साध्यते किंतु 'निर्वचनखण्डनेन पारिशेष्यादनिर्वचनीयत्वं सिद्ध्यति'–इति ब्रूमः॥ नन्वनिर्वचनीयत्वं मा साध्यतां, परिशेषसिद्धानिर्वचनीयताभ्युपगमेनापि द्वैतापत्तिस्तदवस्थेत्यत आह–। [i]"वस्तुतस्त्व"ति। परिशेषसिद्धेप्यनिर्वचनीयत्वे मम नाभ्युपगमः, अपि तु त्वं तथा बोध्यसे इत्यर्थः। भरम्–अध्यवसायम्॥

मू० [a]ये तु स्वपरिकल्पितसाधनदूषणव्यवस्थया विचारमवतार्य तत्त्वं निर्णेतुमिच्छन्ति तान् प्रति ब्रूमः–न सा-

(१) प्रकारान्तरेण=सत्त्वप्रकारेणैव, निर्वाच्यत्वस्य सत्त्वव्यवस्थित्यर्थमित्यर्थः क्वचित्तु "अनीर्वचनीयतायाः सत्त्वव्यवस्थित्यै"–इति पाठस्तत्र प्रकारान्तरेण=अनिर्वचनीयत्वप्रकारेणैवानिर्वचनीयतायाः सत्त्वव्यवस्थित्यर्थमित्यर्थः।

द्वीयं भवतां विचारव्यवस्था, भवत्कल्पितव्यवस्थ
व्याहतत्वात्। [b]अत एवाऽस्मदुपन्यस्यमानदूषणशि
विषयाः पर्य्यनुयोगा निरवकाशाः, [c]त्वद्व्यवस्थयैव
द्व्यवस्थाया व्याहत्युपन्यासात्। *[d]नचोपन्यास
निर्बन्धकारणम्*, विचारोपन्यासस्य(१)सदसत्त्वे
गमाद्युदासीनैर्विचार्य्यमित्युपेत्यैव परं विचारप्र
नायाः शक्यत्वमित्यावेदितत्वात्। [e]यदि तु "वि
रस्य सत्त्वमनभ्युपेत्य न विचारयितुं शक्यम्"-
च्यते, तदा प्रमाणमव्यापार्य्य(२)न तदीयसत्त्वाभ्यु
मोपि शक्यतेऽतिप्रसङ्गात्; इति विचारस्यापि विच
ग्रहणेऽनवस्थया विचारारम्भ एवाऽशक्यः स्या
*[f] नच पूर्वपूर्वसिद्धत्वाद्विचारे विचारान्तरमिदानीं
गवेषणीयम्(३) *। [g]विचारस्य पूर्वसिद्धत्वे विचा
रूपस्वविषयव्यवस्थितत्वात् तस्य, विचार्य्यमपि
मेव विचारितमित्यनारम्भ एव विचारस्य।

टी० ननु, तर्हि सदसत्त्वविचारेपि किमर्थं ते प्रवृत्तिरित्यत आ
[a]"येत्वि"ति। व्यसनभिचतत्त्वद्वेषमात्रेण विचारेत्वदभ्युपगतविचारमर्या
प्रवर्तामहे इत्यर्थः॥ [b]"अत एवे"ति। यतः परपरिकल्पितसाधनदू
व्यवस्थयैव प्रवर्तामहे नतु स्वयं साधनदूषणादिव्यवस्थामभ्युपगच्छामो

(१) विचारोपन्यासनिष्ठे ये सत्त्वाऽसत्त्वे तदुपगमाद्युदासीनैरित्यर्थः, ए
न्वयश्च "परैः पातितपत्त्राणि" इति वच्च दोषावहः। "विरोधोपन्यासस्य"
क्वाचित्कः पाठस्तु प्रामादिकः।

(२) प्रमाणमव्यापार्य्याऽप्रवर्त्याऽनुपन्यस्येति यावत्। तदीयसत्त्वाभ्युपग
विचारसत्त्वाभ्युपगमोपि न, शशशृङ्गादेरपि सत्त्वाभ्युपगमप्रसङ्गात्; तथाच प्रमाणं
विचारसत्त्वाङ्गीकारे प्रमाणव्यापारोपि कथास्मकविचारान्तरे, तस्यापि च स
पगमो विचारान्तरे, एवञ्च इत्यनवस्थानात्प्रथममेव मतिकर्द्दमे विचारारम्भ
क्यमापद्येतेत्यर्थः।

(३) "इदानीं न गवेषणीयम्"–इत्यपि पुस्तकान्तरे दृश्यमानः पाठः सा

तदाश्रिता अद्वैतव्याघातादयो दोषाः स्युरित्यर्थः ॥ "अत" इत्यस्यातिदेश्यमाह—। [c] "त्वद्व्यवस्थये"ति ॥ ननु, विचारे व्याघातोपन्यासस्त्वया कर्त्तव्य इति विचारस्य, व्याघातोपन्यासस्य च, सत्त्वमभ्युपगतमिति द्वैतापत्तिरेवेत्यत आह—। [d] "नचे"ति । 'प्रमाणादेरिव विचारव्याघातोपन्यासयोरपि सत्त्वमनभ्युपगम्यैव विचारे प्रवृत्तिः शक्या'—इत्युक्तत्वादित्यर्थः ॥ प्रथमं मतिक्रमेण विचारप्रवृत्तिरेव न स्यात्'—इत्युक्तं स्मारयति—। [e] "यदि-त्वि"ति ॥ ननु, विचारस्यापि विचार्य्य ग्रहणे विचाराप्रवृत्तिः स्यात्, नत्वेवं, किं तर्हि पूर्वमेव विचारः सिद्धः? (१)इत्यत आह—। [f] "नचे"ति ॥ विचारसिद्धिर्विचार्यसिद्धिनान्तरीयकी, ज्ञानस्येव विचारस्यापि सविषयकत्वात्; तथाच किं विचारेण, विचार्य्यसिद्धेस्तत्फलस्य संपन्नत्वादित्याह—। [g] "विचारस्ये"ति ॥

मू० [a] "अथ*विचार्य्यविशेषस्य पूर्वमसिद्धत्वात् तदर्थं विचारारम्भः? *, [b] तर्हि विचारविशेषस्यापि तद्विषयकस्य पूर्वमसिद्धिरेवेति वृथा शुष्क(२)चर्वणम् । [c] यदि च त्वद्दर्शनरीत्याभिधीयमानमस्माभिर्बाधं बाधसे तदा स्वाभ्युपगतरीतिबाधाभिधायितैव ते स्यात् । [d] अस्माभिर्निर्वाह्यमानस्य त्वया खण्डनयुक्त्यैव बाधेऽस्माकमेव जेतृता, " [e] खण्डनयुक्तयो बाधिकाः, निर्वाह्यपक्षश्च बाध्यः "—इत्यस्याऽस्मदुक्तपक्षस्य त्वयैव निर्वाहात् ।

टी० ननु, विचारलक्षणस्य विचार्य्यस्य पूर्वसिद्धत्वेपि प्रपञ्चसत्त्वात्त्वलक्षणस्य विचार्यविशेषस्य न पूर्वसिद्धत्वमिति तदर्थमये विचारः स्यादेवेत्याह—। [a] "अथे"ति ॥ तर्हि स विचार्य्यविशेषो यस्य विचारस्य

(१) पूर्वमेव विचारः सिद्धः। अनादिसिद्ध इत्यर्थः तथा च बीजाङ्कुरवेदनादिवाचानवस्थेति भावः।

(२) शुनः शुष्कास्थिचर्वणं यथा वृथा तथेदमित्यर्थः ।

विषयः सोऽप्यसिद्ध एव, तत्सिद्धौ विचार्यविशेषस्यापि सिद्धत्वप्रसङ्गः एवं 'ततः पूर्वपूर्वसिद्धत्वाद्विचारे विचारान्तरमिदानीमगवेषणी(१)यम्' इति यदुक्तं तच्छुष्कचर्वणमित्याह—। b"तर्ही"ति ॥ ननु, प्रवर्त्यतां विचारः, तत्र विचारे त्वदुक्ता दोषा मया युक्त्यन्तरेण बाधनीया इत्यवसानं स्यादित्यत आह—। c"यदि चे"ति ॥ ननु, दोषा अपि हेत्वाभासादयस्त्वया खण्डिता एव, तदेव खण्डनमादाय त्वयोद्भाव्यमाना दोषा मयापि खण्डनीया, इत्यहमेव जेष्यामित्यत आह—। d"अस्माभिरि"ति यद्यपि तस्यां कथायां त्वदुपन्यस्तदोषाणां परेण खण्डनयुक्त्या बाधे परस्य जेतृता, न तव, उपन्यस्तदोषस्य त्वयाऽनिर्वाहात्; तथापि मे खण्डनयुक्तीनां बलवत्त्वं तावदङ्गीकृतमित्येतावतैव मम जेतृतेति (२) यम् ॥ कथं जेतृतेत्यत आह—। e"खण्डने"ति ॥

मू० a"तस्मात्त्वया निर्वाह्यमस्माभिस्तु खण्डनीयमितीयमेव परं कथायां त्वन्निर्वाह्यनिर्वाहे तव जयो नान्यथेति । bतदेवं भेदप्रपञ्चोऽनिर्वचनीयः, ब्रह्मैव परमार्थसदद्वितीयमिति स्थितम् (३) ।

---

*c नन्वद्वैते किं प्रमाणम् ?* । d प्रश्न एव तावदद्वैतमनङ्गीकुर्वतो नोपपद्यते । e प्रमाणं यत्राद्वैते (४) पृच्छ्यते तस्याऽप्रतीतौ कथमेवंभूतः प्रश्नः संगच्छते ।

---

(१) 'न गवेषणीयमि'त्यपि क्वाचित्कः पाठः साधुरेव ।

(२) यथा निर्वाह्यार्थः खण्डनयुक्तिभिर्बाध्यस्तथा खण्डनयुक्तयोऽपि तत्र बाध्या इत्येतावतैव मम जेतृतेति भावः ।

(३) { किमस्ति मानमद्वैते इतीष्टे प्रष्टुमेव न ।
मतत्वे वाऽमतत्वे वेत्येतत्प्रस्तूयतेऽधुना ॥ }

(४) "यथाम द्वैते" इत्यपि पाठः ।

**प्रमाणमात्रं भवता पृच्छयते, किंनाम विषयविशेषनियतम्, तच्च(१)तदोपपद्यते यदि तादृशं ते प्रतीतिमारोहेत्, प्रश्नस्य वाग्व्यवहारविशेषत्वात्, व्यवहारस्य च स्वज(२)नकज्ञानविषयनियतत्वात्। अन्यथा व्यवहाराणां विषयनियमप्रयोजकस्यान्यस्यासंभवेन व्यवहारविषयपारिप्लवापत्तेः ।**

टी० ननु, ब्रह्माद्वैतं त्वया निर्वाह्यं, तन्मया खण्डनीयं, प्रपञ्चखण्डनमप्यन्ततस्त्वया निर्वाह्यं, तत्र प्रतिखण्डनं मया कर्त्तव्यमित्यपर्य्यवसानं तदवस्थमेवेत्याशङ्क्य कथासन्दर्भमुपसंहरति—। ""तस्मादि"ति । यद्यपि "त्वया ब्रह्माद्वैतं स्थापनीयं, मया खण्डनीयम्, इतीदृश्यामेव कथायां मया वक्तव्यं, नान्यत्रे"ति परेणापि वक्तुं शक्यते,* नचैवं कथैव न(३)स्यादिति वाच्यम्*, इष्टापत्तेः; अनिष्टत्वे चास्योभयसमाधेयत्वात्(४)। *ब्रह्म स्वतःसिद्धमेव न तत्र साधनापेक्षा *;—इति चेति, प्रपञ्चोपि सर्वजनसिद्ध एव न तत्र साधनापेक्षेति तुल्यम् । * सर्वजनसिद्धत्वमपि त्वयोपपादनी(५)यम् *?—इति यदि, तदा स्वतःसिद्धत्वमपि त्वयोपपादनीयमिति तुल्यम् । *तर्हि वितण्डा कथैव न स्यादुभयोरपि स्थापनाप्रस-

(१) तदिति सामान्ये नपुंसकं, स विषयविशेषनियतप्रमाणप्रश्न इत्यर्थः । तदोपपद्यते यदि तादृशं = विषयविशेषनियतं प्रमाणं, ते प्रतीतिमारोहेत् विषयश्चाद्वैतमेवेति भावः ।

(२) स्वस्य = व्यवहारस्य जनकं ज्ञानं स्वजनकज्ञानम्, तस्य यो विषयस्तेन नियतत्वान्नियमेन तद्गोचरत्वादित्यर्थः ।

(३) कथा हि समयबन्धपूर्विका, समयबन्धश्च माण्डनिकेन सद्वैतं ब्रह्म स्थापनीयमित्येव, इदानीं खण्डने प्रवृत्तेन तेन स उपेक्षित इत्यये कथैव न स्यादित्यर्थः। यद्वा, वैतण्डिकेनाप्यद्वैतब्रह्मस्थापने वितण्डा कथैव न स्यादित्यर्थः।

(४) यथा माण्डनिकेन सद्वैतं ब्रह्म स्थापनीयमित्यस्ति समयबन्धस्तथा खाण्डनिकेन तत्खण्डनीयम् (अर्थादद्वैतं व्यवस्थापनीयम् ) इत्यपीति तदनिर्वाहे कथाऽभावप्रसङ्गस्तस्यापि तुल्य इत्यवश्यं तेनापि समाधेयत्वादिति भावः ।

(५) त्वयोपपादनीयम् = त्वयैवोपपादनीयं, (स्वकपोलकल्पितमिति यावत्) ।

ह्नात् *?—इति चेत्, शक्ति(१)जिज्ञासया प्रपञ्चवादिनामप्यन्योन्यं तत्सं-भवात्, तथापि खण्डनयुक्तयो बलवत्य इत्यत्रैव हृदयम् ॥ स्वपक्षमुपसं-हरति—। [b] "तदेवमि"ति ॥

---

ननु "ब्रह्मैव परमार्थसत्"—इति त्वयोच्यते, तथाच प्रतिज्ञैवेयं तत्र प्रमाणमुपन्यस्तुमर्हतीत्याह—। [c] "नन्वि"ति ।। उत्तरमाह—। [d] "प्रश्न एवे"ति । प्रश्न एव तावत् प्रमाणमिति विच्छिद्यापि(२)योजयन्ति । प्रश्ना-न्यथानुपपत्तिरेवाद्वैतसाधिकेत्यर्थः ।। तामेवाह—। [e] "प्रमाणमि"ति । अद्वै-तज्ञानमन्तरेण तन्नियत(३)विषयप्रमाणप्रश्न एवानुपपन्न इत्यर्थः ॥ नन्वद्वै-तमज्ञानानस्यापि तत्प्रमाणप्रश्नः स्यादित्यत आह—। [f] "प्रश्नस्ये"ति । 'अद्वैते किं प्रमाणम्' ?—इत्ययं वाग्व्यवहारस्तावज् ज्ञानजन्यः, तथा तज्ज्ञानविषयविषयत्वध्रौव्यमेवास्य; अन्यथा स्वजनकज्ञानविषयाऽतिरे व्यवहाराणां व्यवहर्त्तव्यनियमो न स्यादित्यर्थः ॥

मू० [a]यदि चाद्वैतं प्रश्नविषयः प्रतीतमुच्यते तदा तत्प्रतीतिस्तेप्रमा वा स्यात्? अप्रमा वा ?। आद्ये यदेव तस्याः प्रमायाः करणं तदेवाद्वैते प्रमाणं तत्रापि संप्रतिपन्नमिति वृथा तस्य प्रश्नः।* [b]नच वाच्यं सामान्यतोऽद्वैतप्रमाणसिद्धौ(४)भूतायामपि विशेषतः प्रमाणप्रश्नः *, [c]यत सामान्यसिद्धावेवाऽद्वैतसिद्धौ विशेषविचारः काकदन्तविचारवत्स्यात्; [d]सामान्यसिद्धिरेव च विशेषमप्य

---

(१) शक्तिजिज्ञासया = परप्रतिपादनसामर्थ्यज्ञानेच्छया, प्रपञ्चवादिनां = प्रपञ्चवादिनां, तत्संभवात् = वितण्डाकथासम्भवादित्यर्थः । अवैतण्डिका अपि वित कुर्वते इति भावः ।

(२) अपिशब्देन 'प्रश्न एव नोपपद्यते'—इत्यन्वयस्तु प्रसिद्ध एवेति समुच्ची

(३) तद्=अद्वैतं, नियतो विषयो यस्य प्रमाणस्य तद्विषयकः प्रश्न इत्यर्थः

(४) अद्वैतप्रमाणसिद्धौ भूतायाम् = अद्वैतप्रमाणसिद्धौ सत्याम् ।

क्षिप्यानयन्ती विशेषमपि ते कथितवती किमत्र प्रश्नेन, [e]परिगणितेषु हि प्रमाणप्रकारेषु मध्ये यत्रैव दोषं न प्रमिणोषि तत्रैव विशेषे सामान्यस्य विश्रान्तेः। [f]यदि च परिचितचरेषु प्रमाणप्रकारेषु सर्वेष्वेव दोषं प्रमिणोषि तदा प्रमाणान्तरमाक्षिप्यापि सामान्येन विश्रमणीयमेव (१)।

टी० नन्वेतावताऽद्वैतप्रतिपत्तिरायाता, प्रमाणानुयोगस्तदवस्थ एवेत्यत आह—। [a]"यदि चे"ति। अद्वैतमनुमाय, श्रुत्वा, दृष्ट्वा वा तवायं प्रश्नः; तथाचानुमानं, शब्दः, इन्द्रियं वा, तत्र प्रमाणमिति त्वयैव ज्ञायते किं प्रश्नेनेत्यर्थः॥ ननु, प्रश्नान्यथानुपपत्तिः प्रमाणसामान्यसाक्षिणी भवतु प्रमाणविशेषजिज्ञासा तद्विशेषाभिधानमन्तरेण कथं निवर्तताभित्याशङ्क्याह—। [b] "नचे"ति॥ अद्वैतसिद्धिरस्मदपेक्षिता, त्वया चाऽनुमता, किमत्र विशेषजिज्ञासयेत्याह—। [c] "यत"इति॥ ननु, तथापि विशेषं पृच्छतः किमुत्तरमत आह—। [d] "सामान्ये"ति। नहि निर्विशेषं सामान्यमिति भावः॥ नन्वेतावता विशेषत्वेनैव विशेषः सिद्धो नत्वनुमानादिभावेन, तादृशी च सिद्धिरपेक्षितेत्यत आह—। [e]"परिगणितेष्वि"ति॥ ननु परितेषु सर्वत्र दोषं पश्यत एव ममायं प्रश्नः? इत्यत आह—। [f] "यदिचे"ति॥

मू० "यदि च 'का प्रमाणव्यक्तिरसौ' ?—इति प्रश्नार्थः परिशिष्यते, तदा न सर्वा व्यक्तिर्विशेषतो निर्देष्टुं शक्यते—इति तदनिर्देशेपि न नः किंचिदपचीयते। [b]यदि च द्वितीयः, तदानीमद्वैतप्रतीतिमप्रमां मन्यमानस्य तव 'अप्रमाविषये किं प्रमाणम्?'—इति कथं न प्रश्नो व्याहन्यते। [c]अथ "अप्रमा सा मम मते, त्वन्मते तु प्रमैवेति तत्करणं

(१) निर्विशेषसामान्याऽयोगादिति भावः।

प्रमाणं पृच्छ्यते ?''—इति ब्रूषे, नैतदप्युपपद्यते, तथा द्वैते ज्ञानं यदुत्पद्यते तत्करणं मया प्रमाणरूपं वक्तव्यमित्यत्र ममाऽनियमात् । यदि नाम मया सदाऽद्वैतमभ्युपेयते तावता किं तावकीनस्य तज्ज्ञानस्य करणमवश्यं प्रमाणं स्यात् ? [d]वस्तुतो वन्हिमत्यपि पर्वते यदि कश्चिद्बाष्पं धूमं प्रतीत्य ततो वह्निमनुमिनोत्येतावता किं बाष्पविषयं धूमज्ञानं करणं प्रमाणमेष्टव्यम् ?—इति ।

टी० नन्वनुमानत्वादयोऽपि प्रमाणत्वविशेषाः सामान्यमेव, तथा तत्रापि विशेषजिज्ञासया प्रश्नः ? इत्यत आह—। [a]''यदि चे''ति ॥ 'अद्वैतप्रतीतिरप्रमा'—इति पक्षं दूषयति—। [b]''यदि चे''ति । यद्यपि 'अप्रमाविषये किं प्रमाणम् ?' इत्याकारो न मम प्रश्नो येन व्याघातः स्यात्, नच(१)तदाकारप्रश्नेऽपि व्याघातः, नहि यदप्रमाविषयस्तत्कदापि न प्रमाणविषयः तथाप्यापातस्फूर्तिको व्याघात इत्यर्थः ॥ त्वदभिमानमनुरुध्याऽयं प्रश्नः मम तु बाधितविषयतया सर्वज्ञाद्वैतज्ञानमप्रमैवेति न व्याघात इत्यत आह—। [c]''अथे''ति ॥ विषयाऽबाधेऽपि क्वचि(२)त्करणं दुष्टं दृष्टं, तथा 'अद्वैतविषयं तवापि ज्ञानं प्रमैव(३)दुष्टकरणजन्या'—इति संभावनायां कथं तत्र मया प्रमाणं वक्तव्यमित्याह—। [d]''वस्तुत''इति । अत्र, यद्यपि 'कति ते पुत्राः' ?—इति प्रश्नमात्रप्रत्याशया पुत्रान् संभावयतो दार(४)परिग्रहेऽप्युदासीनस्य, सर्वजनप्रसिद्धप्रपञ्चविद्वेषिणः शशशृङ्गकूर्मरोमगगनारविन्दादि

(१) अप्रमाविषये किं प्रमाणमित्याकारप्रश्नेऽपि न व्याघातो न हि यदप्रमाविषयस्तन्न कदाचित्प्रमाणविषयः, पूर्वं तथाऽप्यवच्छेदेन रजतत्वेनाऽप्रमाज्ञानविषयस्य शुक्त्यादेः कालान्तरे शुक्तित्वेन प्रमाणज्ञानविषयत्वादित्याह—न चेति ।

(२) क्वचित् = वन्हिमत्पर्वतधर्मिकबाष्पलिङ्गकवन्ह्यनुमित्यादौ संवादिभ्रमे ।

(३) प्रमाऽत्राबाधितार्थगोचरं ज्ञानं, न तु प्रमाणकरणकं ग्राह्यम् ।

(४) दारपरिग्रहेप्युदासीनस्य कति ते पुत्राः ?—इति प्रश्नमात्रप्रत्याशया पुत्रान् संभावयतस्ते कः प्रतिमल्लः ( प्रतिभटः, वारयितेति तु फलितम् ) इत्यन्वयः ।

प्रमाणप्रश्नबलायातमनन्तं प्रपञ्चं साधयतः, कस्ते प्रतिमल्लः,कथं वा'ब्रह्म नास्तीत्यत्र किं प्रमाणम्' ?–इत्यनेन प्रश्नेन ब्रह्मनास्तितैव न सिद्ध्येत् । कथायां यस्य यस्य पदार्थस्याभावस्त्वया साध्यस्तस्य तस्य प्रमाणप्रश्नबलात् तत्तत्सत्ता तदानीमेव वाद्यन्तरेण साधनीया इति दुस्तरं व्यसनम् वस्तुतो(१)'ब्रह्माद्वैतं घटादिवृत्ति न वा'–इति मध्यस्थविप्रतिपत्तौ 'ब्रह्माद्वैतं घट(२)वृत्ती'ति विधिकोटिपरिग्रहे त्वया कृते तत्र प्रमाणप्रश्ने प्रमाणवचनमेवोचितं, कथासंप्रदायस्य तवापीष्टात्वत्; तद्विप्लवे पुनर्दुस्तरव्यसनमेव, तथापि वक्ष्यमाण(३)प्रमाणावष्टम्भादेतदुक्तमिति हृदयम् ॥

सू० "अस्तु वा प्रश्नोऽयं यथातथा, श्रुतिरेवाद्वैते प्रमाणमिति ब्रूमः । श्रूयते खलु"एकमेवाद्वितीयं नेह नानास्ति किंचन" इत्यादि । "श्रुतिप्रामाण्यं सिद्धार्थप्रामाण्यं चेश्वराभिसन्धौ साधयिष्यते । 'सिद्धार्थानां(४)श्रुतीनामन्यपरत्वमपि यदि स्यात्तथापि पद(५)समन्वयबलेन तासु प्रतीयमानमर्थमबाधितमादायैव तासामन्यपरिभवनात्(६),"धियां स्वतःप्रामाण्यस्य बाधकैकापोद्यत्वात् ।

टी० एतेनैवानुशयेनाह–। "अस्तु वे'ति ॥ नन्वनृत(७)व्याघातपुन-

(१) 'वस्तुत'–इत्यस्य प्रमाणवचनमेवोचितमित्यनेनान्वयः ।

(२) अत्र घटादिवृत्तीति पाठः समुचितः, प्रतिज्ञाया विप्रतिपत्त्यनुगुणत्वौचित्यादित्यनुमन्ये ।

(३) "श्रुतिरेव प्रमाणम्"–इति वक्ष्यमाणं प्रमाणप्रतिवचनमवष्टभ्यैव प्रश्नखण्डनाभिधानमित्याशयः ।

(४) सिद्धार्थानाम् = अहेयानुपादेयार्थप्रतिपादिकानाम् ।

(५) पदानामेकमेवाद्वितीयमित्यादीनां य उपक्रमादिभिर्लिङ्गैर्द्वयणि समन्वयस्स त्वर्थ्यणाभिधायित्वं तद्बलेनेत्यर्थः ।

(६) अन्यस्य द्वैतावगाहिप्रत्यक्षादेः परिभवनात् तिरस्करणादित्यर्थः । अनन्यपरीभवनादित्यपि क्वचित्पाठः, तत्राद्वैतैकमात्रपरत्वादित्यर्थः ।

(७) अनृतदोषो यथा पुत्रकामेष्टौ 'पुत्रकामः पुत्रेष्ट्या यजेते'ति, नेष्टौ संस्थितायां पुत्रजन्म दृश्यते । दृष्टार्थस्य वाक्यस्यानृतत्वाददृष्टार्थमपि वाक्यम् 'अग्निहोत्रं जुहुयात्

रुक्तादिदोषेभ्यः श्रुतीनामेव न प्रामाण्यं, प्रामाण्ये वा सिद्धार्थश्रुतीनां प्रामाण्यं, विधिप्रत्ययसमभिव्याहृतवाक्यस्यैव ज्ञानद्वारा व्यवहारत्वेन प्रवर्तकज्ञानं प्रति सामर्थ्यावधारणात्; नच "एकमेवाद्वितीयं ब्रह्म" इत्यादिश्रुतीनां कार्योपराग(१)स्तथाच न प्रामाण्यमित्यत आह—। b "श्रुति ॥ ननु, यत्परः शब्दः स शब्दार्थः, न त्वासां श्रुतीनां ब्रह्माद्वैतपरता किं तर्हि, मुमुक्षुणा ब्रह्मैवैकमुपासनीयमित्यत्र तात्पर्यं, तथाचोपासनापरत्वमेवासां प्रमाणत्वं, नतु ब्रह्माद्वैतेपीत्यत आह—। c "सिद्धार्थानामिति" विशेषणं(२)चैतत् प्रकृतश्रुत्यपेक्षया । "एकं,ब्रह्म" इतिपदसमन्वयबलेन प्रतीयमानोर्थः स चोपासनापरत्वेप्यबाधित एव वाच्य इत्यर्थः ॥ ननु "आदित्यो यूपो यजमानः प्रस्तरः"—इत्यादौ पदसमन्वयबललभ्यसामानाधिकरण्ये श्रुतेरप्रामाण्यं यथा, तथाऽस्याः किं नेत्यत आह—। d "धियामि" तत्र तत्र बाधकात् प्रतीयमानोर्थस्त्यज्यतेऽत्र न बाधकमित्यर्थः ॥

---

सू०* ननु,(३)नाऽद्वैतश्रुतीनामृजावर्थे(४)प्रामाण्यं संभवति प्रत्यक्षादिबाधात्;ततश्चा'न्यत्रैव क्वचित्तात्पर्यं कल्प्यम्?। मैवम् । यदद्वैतश्रुतेर्बाधकं प्रत्यक्षादि मन्यसे तदात्मीये विषये घटपटादेर्भेदे नियत एवोत्पद्यते,

---

स्वर्गकाम' इत्याद्यचतमिति ज्ञायते । विहितव्याघातदोषश्च 'उदिते होतव्यमनुदिते होतव्यमि'ति विधाय 'श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति, शबलोऽस्याहुतिमभ्यवहरति योऽनुदिते जुहोती'ति । पुनरुक्तदोषो यथा अभ्यासे दृश्यमाने 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति ।

(१) कार्य्योपरागः=क्रियोपरागः, हेयोपादेयार्थप्रतिपादकत्वमिति यावत् ।

(२) ननु, 'सिद्धार्थानामि'त्येतद्विशेषणं व्यर्थं, यावता क्रियाऽभिधायिनीनां श्रुतीनां तात्पर्य्यतो ब्रह्मण्येव समनुगतत्वेनाऽबाधितार्थमादायैवाऽन्यपरिभावकत्वं प्रसाधनीयमित्यत आह-विशेषणं चैतत्प्रकृतश्रुत्यपेक्षयेति । प्रकृतश्रुतिस्तु-"एकमेवाद्वितीयमि"त्यादिरूपा ।

(३) { अद्वैतश्रुतिबाधाय नाध्यक्षादि प्रकल्प्यते ।
अल्पाल्पविषयत्वेनेत्येतत्प्रस्तावयत्यथ ॥ }

(४) ऋजावर्थे=सिद्धार्थे ।

प्रत्यक्षादिकं भूतभाविवर्त्तमानसकलव्यक्तिभेदग्राहि जायमानमावयोः सम्प्रतिपन्नमस्ति, [d]तादृशेन ज्ञानेन चोत्पद्यमानेन सर्वज्ञतां तदा तव श्रद्दध्यां यदि जानासि मम चेतसि किं वर्त्तते इति । [e]यदि च प्रत्यक्षादि किंचिन्मात्रविषयं तदा तद्विषयादन्यत्रापि प्रवर्त्तमानाऽद्वैतश्रुतिस्तेन न बाधितुं शक्यते, स्वविषयमात्रे प्रमया विपरीतविषयज्ञानबाधनात्; अन्यथाऽतिप्रसङ्गात् । [f]मा हि भूद्(१)अग्नीषोमीयपश्वालम्भनविधिना सर्वभूताहिंसाश्रुतेर्वैयर्थ्यम् ।

टी० ननु, प्रकृतेपि बाधकमस्तीति शङ्कते—। [a]"नन्वि"ति ॥ [b]"अन्यत्रे"ति । ईश्वरैकत्वं वा ब्रह्मैकोपास्यत्वं वा प्रतिशरीरमेकैकात्मत्वं वा यद्बोध्यं तत्रैव च सामर्थ्यमित्यर्थः ॥ ननु, घटपटमात्रभेदविषयकं प्रत्यक्षं श्रुतिबाधकमिति नोच्यते, किंतु सामान्यलक्षणया प्रत्यासत्त्या सकलपदार्थभेदविषयकमेकं प्रत्यक्षमिष्यते, तत्कुक्षिस्थितानां(२)भेदार्भकाणां न किंचिद्भयं श्रुतिडाकिन्या इत्यत आह—।[c]"नतु प्रत्यक्षादिकमि"ति । त्वयेष्यमाणत्वमतन्त्रमित्यर्थः ॥ तादृशज्ञाने प्रमाणाभावमाह—।[d]"तादृशेने"ति ॥ ननु, घटपटादिनियतविषयमेव प्रत्यक्षं श्रुतिबाधकमस्तु किमत्याहित(३)मित्यत आह—। [e]"यदी"ति ॥ [f]"मा हि भूदि"ति । "न हिंस्यात्सर्वा भूतानि"—इत्येका श्रुतिः, "अग्नीषोमीयं पशुमालभेत" इत्यपरा, तत्र चानयाऽग्नीषोमीयपशावेवाऽहिंसाश्रुतिर्बाध्यते नत्वन्यत्रापि, विषयभेदादित्यर्थः ॥

(१) अतिप्रसङ्गमेव स्फुटयति—मा हि भूदिति । माभूदिति तु विद्यासागराभिमतः पाठः । विरुद्धार्थग्राहितामात्रेण बाधकत्वमेकविषयत्वाभावेपि चेद्धिंसाविषयत्वेन तदभावविषयत्वस्य विरोधात्पश्वालम्भनविधिना सर्वभूताऽहिंसाविधेर्वैयर्थ्यं=निर्विषयत्वमप्रामाण्यं स्यात्तन्माभूदित्यर्थः ।

(२) तत्कुक्षिस्थितानाम्=सामान्यलक्षणाप्रत्यासत्तिकुक्षिनिविष्टानाम् ।

(३) अत्याहितम् = भयम् "अत्याहितं महाभीति"रिति कोशात् । अस्यैवार्थस्याऽविज्ञानात्प्रायः पुस्तकेषु 'किमन्याहितमि'ति प्रकल्पितः पाठो दृश्यते ।

मू० "यदा चैवं, तदा बाधिकायाः प्रत्यक्षधियो बाध्याय
श्चाऽद्वैतबोधने श्रुतिर्निराबाधा सती तयोरैक्यं बो
यतीति तत् प्रत्यक्षादि कथं स्वात्मान(१)मेव बाधे
[b]घटेन(२), पटेन तद्भेदेन च स्वविषयेण सह तस्या
धियः श्रुत्या सर्वस्याद्वैतं गोचरयन्त्या कथं ना
प्रामाण्यमासादयितव्यम्, तत्राबाध्यमानत्वात्।
(३)तस्या धियः स्वात्मा वा, स्वात्मना सह घट
देर्भेदोपि वा, विषयः। [d]"घटपटौ(४)भिन्नावि'
माकारा हि सा जायते, नतु 'अहं घटात् पटाच भिन्
मत्तो वा तौ भिन्नौ'-इति। [e]स्वप्रकाशतापि स्व
साक्षिणी, नतु यतो यतः प्रकाशो भिद्यते तत
स्तस्य भेदेपि। [f]अन्यथा तत्तदपि स्वप्रकाशकुक्षौ नि
पन्ती न कथमद्वैते एव पर्यवस्यति।

टी० ननु, समाने एव विषये बाध्यबाधकभावोऽस्तु किमैक्यस
त्यत आह-।[a]"यदाचे"ति। बाध्यबाधकधियोरैक्ये बाध्यबाधकभाव
भाव एवेत्यर्थः॥ बाधकाभिमतप्रत्यक्षस्य विषयेण सह; भेदः श्रुतिबो
इत्याह-।[b]"घटेने"ति॥ तदेवोपपादयति-।[c]"नही"ति॥ कथं
आह-।[d]"घटपटावि"ति॥ मीमांसकशङ्का(५)मपनयति-।[e]"स्वप्रका

(१) बाध्यबाधकधियोरैक्ये बाध्यायाः श्रौतधियो बाधने प्रत्यक्षेण स्व
एव बाधः कृतः स्यादिति भावः।

(२) घटेनेति, सर्वस्याऽद्वैतं गोचरयन्त्या श्रुत्या घटेन, पटेन, तद्भेदेन च
येण (घटपटौ भिन्नावित्येवं विधभेदग्राहिप्रत्यक्षविषयेण) सह तस्या धियः (
प्रत्यक्षधियः) अभेदबोधने प्रामाण्यं कथं नासादयितव्यम्-इत्यन्वयः।

(३) नहीति, स्वविशिष्टभेदग्रहणांशतः स्ववृत्त्यापातादित्यर्थः।

(४) घटपटाविति यदाकारा बुद्धिर्जायते तदाकारवानेवार्थस्तद्विष
नियमाद्बुद्धिधर्मिकबुद्धिप्रतियोगिकभेदाकारत्वाभावाच्चानया तत्त्वं भासत
(५) बुद्धेः स्वप्रकाशत्वात्स्वभेदग्राहकत्वमुपपद्यते इति मीमांसकशङ्का

ति ॥ ननु, यतो यतः प्रकाशो भिद्यते तत्सर्वं स्वप्रकाशज्ञानविषय इत्यत आह–। [f] "अन्यथे"ति । स्वप्रकाशबलेन तत्सर्वं तदा भासेत यदि तदपि स्वं भवेत् तथा च स्वभिन्नत्यापि सर्वस्य स्वप्रकाशज्ञानात्मत्वे तदद्वैतमेव पर्यवस्येदित्यर्थः ॥

मू० *[a]नच तया धिया स्वस्य, स्वविषयस्य च स्वरूपावगाहने स्वरूपलक्षणो भेदः प्रकाशित एव स्यादिति वाच्यम् *, "पुरोवर्त्ति रजतमि"ति भ्रान्तौ पुरोवर्त्यात्मनो रजतात्मनश्च प्रकाशे भेदग्रहापत्तेः । [b] धर्मविशेषमन्तर्भाव्य स्वरूपस्य भेदत्वे धियोऽपि तथा स्यादिति सैव धीर्न तत्प्रकाशस्तस्मिन्सन्निकर्षाद्यपेक्षायां धियः प्राक्तनदसंभवात् । [c]*आत्मवदात्मधर्म्मेऽपि सन्निकर्षानपेक्षा सा*?–इति चेन्न, [d]ग्रहणत्वस्मृतित्वप्रमात्वादावपि तथैव स्यादिति

टी० ननु, स्वप्रकाशज्ञानस्य स्वं विषय इति विषयाद्[1] घटपटादेः ...स्य स्वरूपभेदः कथं न विषयो भवेदित्यत आह–। [a] "नचे"ति । ...स्वरूपभेदग्रहस्याऽभेदग्रहपरिपन्थित्वे भ्रमः क्वापि न स्यात्तस्य[2] ते... आरोप्यारोपविषयग्रहपूर्वकत्वात्, तस्य चारोपपरिपन्थित्वादित्यर्थः ॥ ननु, ...स्वरूपमात्रं न स्वरूपभेदः, किंतु परस्परवैधर्म्यविशिष्टं स्वरूपं तच्च शुक्ति-...रजतयोर्न गृहीतमिति नारोपानुपपत्तिरित्यत आह– [b] "धर्म्मे"ति । तर्हि ...धियोऽपि स्वरूपमात्रं न भेदः, किंतु वैधर्म्यालिङ्गितं स्वरूपं, वैधर्म्यं च ...स्वस्य[3] प्रकाशत्वेऽपि न स्वविषयः, किंतु संयुक्त[4]समवेतसमवायेन प्रत्या

(१) घटपटादेर्विषयादित्यन्वयः ।

(२) तस्य=भ्रमस्य, आरोप्यारोपविषयग्रहपूर्वकत्वात्,=आरोप्यं रजतादिरारोपविषययोऽधिष्ठानं शुक्त्यादिस्तदुभयस्मरणग्रहणपूर्वकत्वात, तस्य च=आरोप्यारोपविषयस्वरूपभेदग्रहणस्य च, आरोपपरिपन्थित्वात्=भ्रमपरिपन्थित्वेन त्वयाङ्गीकारादित्यर्थः ।

(३) स्वस्य=ज्ञानस्य, प्रकाशरूपत्वेऽपि न ज्ञानविषय इत्यर्थः ।

(४) मनःसंयुक्त आत्मा, तत्समवेतं ज्ञानं, तत्र समवायो ज्ञानत्वादेर्धर्मस्येत्यर्थः ।

सत्या मनसा तद्ग्रहो भवेत्, नच(१)स्वोत्पत्तेः पूर्वं स्वघटितसंयुक्त समवायः प्रत्यासत्तिः संभाव्यते इत्यर्थः ॥ ननु, यथा प्रत्यासत्ति स्वग्रहस्तथा स्वधर्मग्रहः स्यात् को दोष इत्यत आह(२)—। c"आत्मे ति ॥ d "ग्रहणात्वे"ति । तथाच ग्रहणात्वस्मरणत्वसंशयो न स्यात् प्रामाण्याऽप्रामाण्यसंशय इति भावः ॥

मू० "तदेवं सा बुद्धिः श्रुत्या घटपटात्मतया व्यवस्थाप्यते ना कथमात्मनः(३)स्वस्मादेव भेदे प्रमाणीभवितुं तीति" बाधिकायां बुद्धौ घटपटयोर्भेदे प्रमात्वाभ सादयन्त्यां श्रुतिस्तत्र(४) तत्राप्रतिहन्धित्वाऽसङ्कु तस्वतः प्रामाण्यबललब्धतत्तदर्थैक्यान्यथानुपप हायसम्पदाऽजय्या तयोरप्यभेदं बोधयन्ती न प्र शक्येति न(५) क्वचिदपि प्रतिहतप्रसरा सती स प्रमापिकेति । c भेदप्रमान्यथानुपपत्त्या च वै मशक्यम् ।

टी० ननु, तया धिया स्वस्य स्वरूपभेदोऽपि मा गृह्यतां कि मित्यत आह—। a"तदेवमि"ति । घटपटभेदग्राहकं यत्प्रत्यक्ष

(१) नच ज्ञानोत्पत्तेः पूर्वं ज्ञानघटितनिरुक्तप्रत्यासत्तिरित्यर्थः। अयं चिकर्षस्य बुद्धिजन्मार्थत्वाद्बुद्धेः प्रागेवासौ वक्तव्यो न च तत्संभवति बुद्ध्यस मवेतधर्मसंनिकर्षासंभवादन्यथाऽन्योन्याश्रयादित्यर्थः ।

(२) इत्यत आह, 'इति चेन्न'-इत्यन्तं सिद्धान्त्याहेत्यर्थः, अत आत्मे पूर्वपक्षग्रन्थत्वेपि नाऽयुक्तिः। एवमग्रेप्येवंविधस्थले ज्ञेयम्।

(३) आत्मनः = स्वाभिन्नघटस्य, स्वस्मात् = स्वाभिन्नघटादित्यर्थः।

(४) बाध्यबाधकबुद्ध्योर्बाध्यबुद्धेश्च स्वविषयैरभेदबोधनेऽप्रतिहन्तृत्व चितञ्च तत्स्वतःप्रामाण्यं चेति तथोक्तम्, तस्य बलं = सामर्थ्यं, तेन लब्धमप्रति याऽसङ्कुचितस्वतःप्रामाण्यबललब्धं,तच्च तत्तदर्थस्यैक्यं चेति तथोक्तं, तस्य याऽनुप सहायस्तस्य संपत् तया ऽजय्या क्वचिदपि प्रतिहन्तुं न शक्येति सर्वाद्वैतप्रमापि

(५) श्रुतिः क्वचिदपि प्रतिहतप्रसरा न सती सर्वाऽद्वैतप्रमापिकेति

त्या घटपटाभिन्नं कृतं तदा घटपटभेदग्राहकत्वेन तस्य न निर्वहेदित्यर्थः॥
नु, घटपटयोर्भेदे सा धीः प्रमाणमतस्तद्द्वयेन श्रुतिस्तत्र कथं प्रवर्तेत
याच घटपटौ विहायाऽन्यत्राद्वैतं सिद्ध्यति नतु तयोरपीत्यत आह—।
बाधिकायामि''ति। घटपटभेदग्राहिणी या बुद्धिस्तया सह घटपटयोरभेदं
ीतवती श्रुतिः घटपटयोरभेदमन्तरेणानुपपद्यमाना तयोरप्यभेदमान-
त । किंच, पटाभिन्नबुद्ध्यभिन्नत्वाद् घटोऽपि पटाऽभिन्नः साधयितुं
र्यते एवेति तदु(१)पष्टम्भोऽपि श्रुतेः । न चास्याः परयाह्यं प्रामाण्यं, येन
दादायापि द्वैतं निर्वहेदिति न किंचिदस्याः श्रुतेः परिपन्थीत्यर्थः ॥
नु, घटपटभेदप्रमैव तद्भेदमन्तरेणानुपपद्यमाना सर्वत्र श्रुतिमपसारयिष्य-
त्यत आह—। ''भेदप्रमे''ति ॥

मू० "तत्राद्वैतश्रुत्या सन्दिह्यमानस्य प्रमात्वस्यैवासिद्धेः"
"भेदधीमात्रस्य च द्विचन्द्रादिबोधवदन्यथाप्युपपत्तेः ।

टी० श्रुतिप्रामाण्यमुभयसिद्धं, प्रत्यक्षप्रामाण्यं चान्यतरमात्रसिद्ध-
ति परिपन्थिश्रुतिदर्शनात्तत्रापि तत्र(२)सन्देहः स्यादिति भेदप्रमान्यथा-
पपत्तिर्दुर्बला न श्रुतिपरिपन्थिनीत्याह—। ''तत्रे''ति ॥ ननु सन्दिह्यतां
माण्यं, भेदज्ञानमगृहीतप्रामाण्यमेव श्रुतिबाधकं स्यादित्यत आह—।
''भेदे''ति । अन्यथासिद्धिशङ्काकलङ्कितस्य न विरोधिज्ञानप्रतिबन्धकत्व-
त्यर्थः । अत्र, यद्यपि (३) सर्वभूताहिंसाश्रुतिरग्नीषोमीयपशवालम्भनबो-
धकया श्रुत्या सङ्कोच्यते नतु बाध्यते, प्रत्यक्षेण तु प्रवृत्तमात्रेणाद्वैतश्रुति-
र्ध्यत एवातो न क्वाप्यस्याः प्रसरः, नहि 'घटपटौ भिन्नौ' एकमेवाद्वितीयं
स'—इति ज्ञाने संभवतो विरोधात् । * दैवः पशुर्हिंस्यः, सर्वभूतमहिंस्य-
त्यनुपपन्नम् * ?—इति चेत्तत्र सर्वपदकृतपदयोर्विषयसङ्कोचेन दैवपशु-

(१) घटपटाभेदाश्रयणमपि विषयतया श्रुतेरावश्यकमित्यर्थः ।
(२) तत्र = प्रत्यक्षे, प्रामाण्यसन्देहः स्यादित्यर्थः ।
(३) मा हि भूदग्नीषामीयपशवालम्भनविधिना सर्वभूताहिंसाश्रुतेर्वैयर्थ्यमित्या-
शङ्कामर्थमाक्षिप्य समाधत्ते-यद्यपीत्यादिना ।

भिन्नं सर्वमहिंसयमिति सामञ्जस्यसंभवात्, इह 'घटपटभिन्नं सर्वमि समञ्जसे(१) क्रियमाणे महदसमञ्जसं, त्वदभ्युपगताद्वैत(२)भङ्गात्। णा(३) तयोरप्यभेदार्थापत्त्या पर्य्यवस्येत् * ?—इति चेत्तर्हि न प्रमाणं, बाधविषये कुण्ठितत्वात् । किंच, तत्त(४)त्प्रत्यक्षशार्दूल संप्रविष्टं भेदमवलोक्य पलायमाना श्रुतिरियमबला प्रतीयमानं स्व संत्यजन्ती ब्रह्मानुचिन्तनमात्रपरैव स्यात् । किंच, "बाधव्याधभयो माऽद्वैतश्रुतिमृगी, ब्रह्मारण्येऽपि विश्वासं कथमासादयिष्यति" सं मिति श्रुत्यर्थः स्वस्मात्सर्वमभिन्नमेवेत्येतावताप्युपपद्यते एव । नास्ति किंचन"—इत्यपि किंचन वस्तु न नानेत्येवमप्युपपद्यते। नहिं वस्तु नाना, सर्वस्य वस्तुनः प्रत्येकमेकत्वात् । किंच, ब्रह्माद्वितो सकलानुमतमेव। किंच, यदि ब्रह्ममात्रावशेषं जगदिति बोध्यं, तदा वैकम्"—इति स्यान्न तु "एकमेव ब्रह्म"ति। किंच, यथा 'एक ए तिरत्र, नतु नाना'इति वाक्यं द्वितीयं नरपतिमेव निषेधति नतु पु मपि नास्तीति(५)ततः प्रतीयते। किंच, तात्पर्य्याधीनं श्रुतिप्रा कुत्रार्थे तात्पर्य्यमित्यनिश्चयाद् दुर्बलायाः श्रुतेरेव सर्वत्र प्रत्यक्षेण बाधः। किंच, चैत्रस्य घटपटभेदज्ञानं, मैत्रस्य कटकुट(६)भेदज्ञानं, त्तस्य नटविटभेदज्ञानम्, इति तत्तदन्यसर्वाद्वैतार्थत्वे श्रुतेर्वाक्यभे

(१) सामञ्जस्ये इति सूचितम् ।

(२) घटपटयोर्भेदव्यवस्थितावच्छेदकावच्छेदेनाभ्युपगताद्वैतभङ्गा

(३) घटपटभेदविषयकबुद्धेः स्वविषयादभेदव्यवस्थितौ तदन्यथानुपप घटपटयोरप्यभेदो व्यवतिष्ठेतेत्यर्थः ।

(४) तत्तत्प्रत्यक्ष=घटपटादिभेदावगाहिप्रत्यक्षमेव शार्दूलस्तन्मुखकुहर विवरे, प्रविष्टं भेदं विलोक्येत्यर्थः ।

(५) इति = इत्यमेव, ततः = एकमेवाऽद्वितीयमितिवाक्याद्ब्रह्मजाति न्तरनिषेधः प्रतीयते—इति कथंचिद्व्याख्येयम् । वस्तुतस्त्वयं दृष्टान्तपरो ग्रन्थः कपरस्तु कथञ्चिद्गलितो वा ऽध्याहर्तव्यो वेति प्रतिभाति ।

(६) कुटो घटः, "घटः कुटनिपावस्त्री"ति कोशात् ।

(७) वाक्यभेदस्तु एकस्यैव वाक्यस्य युगपद्विशिष्टार्थद्वयाऽभिधायकत्व

किंच, अभेदज्ञानस्य 'तानेव[1]तित्तिरीन्' 'तानेव शालीन्'—इतिवदेकधर्मोपग्रहेणाप्युपपत्तिः, भेदग्रहस्तथा नान्यथोपपादयितुं शक्य इति प्रत्यक्षमेव बलीयः । किंच, सर्वमभिन्नं, घटपटौ भिन्नाविति बुद्ध्योः प्रामाण्ये संभवति क्व बाध्यबाधककल्पनापि, नहि[2]प्रमेयत्वादिनापि सर्वमभिन्नं न मन्यामहे, तथापि[3]"आपाततो यदिदमद्वयवादिनीनाम् इत्यादावेव तात्पर्य्यम् ॥

मू० "'एकम्-इत्युपादाय यद् एवकारमप्युपादत्ते श्रुतिः "एकमेवेदम्"-इतिरूपा, तदैकान्तिकमैक्यं बोधयतीति भेदाभेदेनाप्यशक्यसमर्थनं-घटपटादिभेदग्राहिप्रत्यक्षादिप्रामाण्यमिति ।

टी० ननु श्रुत्याऽभेदः, प्रत्यक्षेण च भेदो बोध्यते, द्वयं च प्रमाणमनुरोध्यं, ततो भेदाभेद एवास्त्वित्यत आह—"एकमि"ति । यद्यपि ब्रह्मणा एकत्वं प्रपञ्चाभावे प्रपञ्चाभेदे चोपपद्यते इति कथमियं श्रुतिरेकताऽवधारिका[4] यद्यपि च प्रपञ्चमिथ्यात्वं शङ्कराचार्याद्यनुमतं ननु प्रपञ्चब्रह्मणोरभेद इत्यभेदबोधकतया श्रुतिव्याख्याने ऽपसिद्धान्तः, यद्यपि च घटाद्यभेदे ब्रह्मणोपि जडत्वमिति स्वप्रकाशानन्दरूपत्वविरोधस्तथाप्यापाततो यदिदमित्यादौ वक्ष्यमाणेऽर्थे एव तात्पर्य्यम् ॥

मू० *"बुद्धेर्विरम्य व्यापाराभावात् कथमित्थम्*?-इतिचेन्न "श्रुतितो द्रागेव जातायाः सर्वविषयाया अद्वैतधियो[5]-

(१) पूर्वदृष्टसजातीयतित्तिर्यादिदर्शने यत्र तानेव तित्तिरीन् (विहगविशेषान्) पश्य, तानेव शालीन (तण्डुलानि)पश्येत्यभेदावगाहिनी प्रत्यभिज्ञा, सा तित्तिरित्वशालित्वलक्षणैकधर्मोपग्रहपूर्विका यथा, तथा प्रकृतेप्यभेज्ञानस्योपपत्तिरित्यर्थः ।

(२) सर्वमभिन्नमित्युक्तमुपपादयति—नहीति । प्रमेयत्वादिनाऽभेदः, घटत्वपटत्वादिना तु भेद इति भावः ।

(३) तथापीत्येतद्दूरव्यवहितेन यद्यपीत्यनेनाऽन्वेति । आपातत इति, अद्वैतप्रतिपादनमप्यापातत एवेति निर्गलितार्थः ।

(४) 'विधायिका'-इत्यपि क्वचित्पाठः ।

(५) अद्वैतधिय एवं विधविचारसोपानपरम्पराम् (क्रमिकाऽभेदविषयकप्रतिप.

स्मद्बुद्धय एवंविधविचारसोपानपरम्परामारोहन्त्य नानाविषयेषु तत्प्रामाण्यविषयाः क्रमेण परितिष्ठन्तीत्युच्यमानत्वात् । * 'ननु, यदि नामप्रत्यक्षवित्त्या तया घटपटभेदोल्लेखिन्या स्वात्मना सह घटपटयोर्भेदो न गोचरीक्रियते तावता कथं तस्याः सविषयेण सहाऽद्वैते श्रुतिः प्रामाण्यमासादयितुमीष्टे नन्तरेण तथा सार्द्धं घटपटयोरपि भेदमुल्लिखता तः

ननु 'प्रत्यक्षविरोधादापाततः श्रुतिजबुद्धिः स्वस्मादेवाभेदं याणां विषयीकृत्य क्रमेणार्थापत्त्यादिबलाद् विषयाणामन्योन्यमभेदं यीकरिष्यती'त्यनुपपन्नं शब्द(१)बुद्धिकर्मणां विरम्य व्यापाराभावादित्याह " "बुद्धे"रिति ॥ श्रुतित एकदैव जातायाः सर्वाभेदबुद्धेः सर्वविषये प्रा प्रत्यक्षबाधेन प्रतिबन्धान् झटिति दुर्ग्रहमिति तत्तद्विषयप्रत्यक्षबाधो सक्रमनिबन्धनः प्रामाण्यग्रहक्रमो न तु बुद्धेर्विरम्य व्यापारतेत्याह- त"इति । यद्यपि बाधो(२)बुद्धिमेव प्रतिबध्नाति न तु तत्प्रामाण्यग्रहं कथं न बुद्धेः श्रुतिलक्षणस्य शब्दस्य वा विरम्य व्यापारता तथापि "अत्य ऽसत्यपि(३)ज्ञानमर्थे शब्दः करोती"त्यभिप्रेत्यैतदुक्तम् ॥ घटपटभेद प्रत्यक्षेण स्वात्मना सह घटपटयोर्भेदो न गृहीत इति तत्र श्रुतिर्न तयोरप्यभेदं विषयीकरिष्यतीति यदुक्तं तत्र शङ्कते-। ° "नन्वि घटपटभेदग्राहिप्रत्यक्षं घटपटौ न भवत इति ज्ञानान्तरेण तद्वेद्यापि एवेति तत्रापि श्रुतिर्न प्रभवतीति शङ्कार्थः ॥

---

क्तिपरम्पराम्) आरोहन्त्यो ऽस्मद्बुद्धयो नानाविषयेषु तत्प्रामाण्यविषयाः (अभेदबुद्धिप्रा माण्यविषयाः) क्रमेण परितिष्ठन्तीत्यन्वयः ।

(१) शब्द एकं बोधं जनयित्वा विरतव्यापारो न शाब्दबोधान्तरं जन तथा बुद्धिरप्येकस्मिन्नर्थे ज्ञाततां संस्कारं वा जनयित्वा न ज्ञातान्तरं संस्कारान्त एवं कर्माप्येकत्र विभागमुत्पाद्य न विभागान्तरमित्यर्थः ।

(२) "घटपटौ भिन्नौ-"इत्याकारको बाधः, बुद्धिं-श्रुतिजाऽभेदबुद्धिमित्यर्थः

(३) अत्यन्तासत्यर्थः शशशृङ्गादिस्तत्रापि चेच्छब्दो ज्ञानं जनयति किमुत प्र अद्वैते इति भावः ।

सू० "तर्हि तस्या अपि विषयमापाततः परित्यज्य ययैवापरया बुद्ध्या घटपटभेदबुद्धेर्घटाच्च पटाच्च भेदो विषयीक्रियते तस्याः स्वविषयेण सहाऽद्वैते श्रुतिः प्रामाण्यमवलम्ब्य लब्धपदा घटपटतद्भेदबुद्धिभिः सह द्वितीयाया बुद्धेरभेदे पर्य्यवस्यन्ती सर्वेषामेव तेषामभेदे विश्राम्यति । [b] एवं च सति यत्रैव गत्वा बाधबुद्धिपरम्पराविच्छेदो विषयान्तरसंचारोच्छेदभयादनवस्थाभयाच्चाभ्युपेयस्तस्यामेव बुद्धौ पदमारोप्याऽद्वैतश्रुतिः सर्वं तद्विषयविषयिप्रवाहमद्वैते स्थापयन्ती न केनापि प्रमाणेन क्वचिदपि विषये बाधितुं शक्या । तस्मात्--

[c] सुदूरधावनश्रान्ता (१) बाधबुद्धिपरम्परा ।
निवृत्तावद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते ॥ ८ ॥

टी० यावद्दूरं बाधबुद्धिपरम्परोदयस्तत्रापाततः कुण्ठापि श्रुतिर्बाधबुद्धिपरम्परानिवृत्तौ चरमबुद्धौ पदमारोप्य तद्विषयविषयिप्रवाहाद्द्वैतं बाधयिष्यतीति परिहरति--। [a] "'तर्हि तस्या अपी"ति । प्रमाण्यावलम्बनम्=अबाध्यत्वेन व्यवस्थितत्वं; पदलाभः=सहकारिसाचिव्यं; पर्य्यवसानमभेदबोधनं; विश्रामः=स्वजनितसकलाऽद्वैतधीप्रामाण्यासादनम् ॥ ननु भवेदेवं यदि भेदबुद्धिधाराविश्रामः स्यान्न त्वेवमत आह--। [b] "एवं

(१) सुदूरधावनश्रान्ता, भूरिकक्षानुसरणाऽलसेति यावत् । इदमत्राकूतम्-- "अरिर्मित्रमरेर्मित्रं मित्रमित्रं ततः परम् । तथाऽरिमित्रमित्रं च विजिगीषोः पुरःसराः ॥ पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥ अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः । मण्डलाद्बहिरेतेषामुदासीनो व्यवस्थितः" इति विजिगीषो राज्ञो द्वादश राजमण्डलम् । अत्र खलु यथा लोके कश्चिद्विजिगीषुर्दूरे प्रस्थितः परग्रामिनीं विजित्य निवृत्तौ पार्ष्णिग्राहैर्विजीयते तथा बाधबुद्धिपरम्पराऽद्वैतपरम्पराजयाय दूरं प्रस्थिताऽनवस्थाना क्वचिन्निवृत्तौ पार्ष्णिग्राहैरद्वयाम्नायैर्विजीयते इति । क्वचिद् "विनिवृत्ताऽद्वयाम्नायैः"-- इति पाठः ।

चे"ति । विषयान्तरसंचारदर्शनेनाऽनिर्मोक्षप्रसङ्गभयेन च विश्रामसिद्ध्य[illegible]त्यर्थः ॥ "सुदूरे"ति अद्वयाम्नायैः=अद्वैतश्रुतिभिः । पार्ष्णिग्राहैः=पृष्ठवर्त्तिभिर्विपक्षैरित्यर्थः । यद्यपि चरमेबुद्धिज्ञाने चरमत्वव्याघातः, [illegible] ज्ञाने च कुत्र श्रुतेः पादारोपणं, श्रुतिप्रवृत्त्यर्थं त्वयैव तदुपस्थापने पु[illegible] रमत्वव्याघातः, तदैव तथापि समं भेदग्रहश्च; अनुपस्थापने श्रुतिप्र[illegible] अनुत्पादनम्, तथाच "सुदूरधावनाऽश्रान्ता बाधबुद्धिपरम्पराऽविनिव[illegible] द्वयाम्नायैः पार्ष्णिग्राहैर्न जीयते"-- इति परेणापि पठितुमुचितं(१), [illegible] पि स्वप्रकाशसिद्धमेव ब्रह्माद्वैतमिति भावः ॥

मू० "*नच यत्र तस्य प्रतिपत्तुबुद्धिधाराविश्रान्ति[illegible] पुरुषान्तरबुद्धिर्भेदे प्रमाणं स्यात् * । "तथापि पु[illegible]न्तरेण भिन्नतया सा(२)प्रतीयते इत्यत्र प्रमाणं त[illegible] वाच्यम् । "नहि तदपि पुरुषान्तरेणैव, "न च सं[illegible]ध्यमानम्, श्रौतेन निश्चयेन तन्निवर्तनात्; "तथाप[illegible] वस्थानादिति । "अथ ब्रूषे-*यदा कियद्दूरं बुद्धि[illegible]ऽपरया सा बाधिता भवत्यद्वैतश्रुति(३)स्तदा तस्या[illegible] यापि बुद्धिःशेषं गत्वा नाऽनुव्यवसीयते तत्रापि [illegible]

(१) अत्र यत्खण्डनभूषामणिकृतो रघुनाथस्य शङ्करा--अमतमनूद्य "तव [illegible] यबाधबुद्धिमपेक्ष्य तस्याश्चरमत्वात् । मया तदुपस्थापने त्वया तदैव भेदो ग्रा[illegible] पि न. मयाऽभेदं गृहीत्वैव तदुपस्थापनात् । यथा तव भेदग्रहस्तद्विरोधी तथा [illegible] द्वैतग्रहस्यापि भेदग्रहविरोधित्वादित्यलं काव्यरचनाकुशलानां तेनैव स्वाभिप्रा[illegible] यतां खण्डनकथया"-इति खण्डनं, तच; खण्डनकोटेः सर्वतो बलवत्त्वेन युक्त्या [illegible] ध्यमाणोऽस्याप्यर्थस्याप्रतिष्ठितत्वात्स्वप्रकाशसिद्धमेव ब्रह्म, न तु श्रुतियुक्तिभि[illegible] धनापेक्षेत्यत्रैव तात्पर्य्यात् ।

(२) सा=अन्तिमबुद्धिः, स्वविषयाच्छिन्नतया प्रतीयते- इत्यत्र प्रमाणं वाच्यं, नच तद् वक्तुं शक्यमनवस्थानादिति भावः । क्वचित्तु "सा प्रतीयते"-इति[illegible]

(३) अद्वैतश्रुतिर्बुद्धिपरम्परया कियद्दूरं बाधिता भवति यदा, तदा [illegible] शेषं गत्वा (शेषमवशिष्टां कक्षां गत्वा) नाऽनुव्यवसीयते (ज्ञानान्तरवेद्या न [illegible] समानन्यायात्तत्राप्यद्वैतश्रुतेर्बाधो गम्यते इत्यर्थः । तन्न्यायमित्येतद्व्याचष्टे[illegible] यत्र=कतिपयबुद्धिपरम्परायां, साऽद्वैतश्रुतिर्बाध्यते तत्तुल्यन्यायत्वाद्=अन्तिम[illegible] बुद्धित्वाऽविशेषादित्यर्थः ।

धोऽवगम्यते, यत्र सा बाध्यते तत्तुल्यन्यायत्वादन्तिमबुद्धेरपि'-इति । मैवम् । किं कियतीषु बुद्धिषु व्याप्यव्यापकौ कावप्यवलम्ब्य व्याप्तिग्रहरूपयैव धिया शेषबुद्धौ बाधं व्युत्पादयसीत्थमद्वैतश्रुतेः ? किं वा बुद्ध्यन्तरदृष्टव्याप्तिसनाथया पक्षधर्म(१)हेतुमुल्लिखन्त्या बुद्ध्यान्तिमबुद्धिविषयया ? ।

टी० ननु विषयान्तरसंचारदर्शनादनवस्थाभयाच्च बुद्धिधाराप्रवाहविच्छेदसिद्धावपि पुरुषान्तरबुद्ध्या तद्बुद्धिधाराविषयविषयिपर्यन्तभेदग्राहिण्या श्रुतेर्बाधोऽस्त्वित्यत आह-। [a] "नचे"ति ॥ [b] "तथापी"ति । पुरुषान्तरेण चरमबुद्धेर्भेदो गृह्यते-इति यदि त्वया कथायामेव प्रमाप्यते तदा तत्रैव प्रमाणे श्रुतिप्रवृत्तिः, एवं(२)तत्रतत्रेति पुनरनवस्था, प्रमाणानुपदर्शने च तव पराजय एवेत्यर्थः ॥ ननु न मया तत्र प्रमाणं वाच्यं, किं तर्हि, पुरुषान्तरेणैव वाच्यमतो नानवस्थेत्यत आह-। [c] "नही"ति । पूर्वदोषतादवस्थ्यादिति(३) भावः ॥ ननु यद्यपि मदीयान्त्यबुद्धेः स्वविषयाद्भेदो मया न गृह्यते, यद्यपि च 'पुरुषान्तरेण गृह्यते'-इति मया प्रमापयितुं न शक्यते, तथापि संभाव्यते तावत्, संभावनापि च विरोधिन्येव विपरीतनिश्चयस्येति कथं तत्राप्यद्वयश्रुतिप्रवृत्तिरित्यत आह-। [d] "नचे"-ति । संभावनया प्रमाणाऽप्रवृत्तावनुमानादिकमपि न प्रवर्तेतेत्यर्थः ॥ ननु तर्कादिना विपरीतशङ्कानिवृत्तावनुमानादि प्रवर्तते, नतु तस्यसत्यामेव, प्रकृते तु तथाविधतर्को नास्ति यः संभावनां विहन्यादत आह-। [e] "तथाप्यनवस्थानादि"ति । यद्यपीयमनवस्था तुल्यैव, संभाव-

(१) पक्षस्य यो धर्मः हेतुर्बुद्धित्वादिस्तमुल्लिखन्त्याऽनुमानरूपया धियेत्यर्थः ।

(२) एवं तत्रतत्र प्रमाणे प्रमाणान्तरप्रदर्शने स्याऽनवस्थेत्यर्थः ।

(३) पुरुषान्तरेणापि प्रमाणप्रदर्शने तत्प्रदर्शितप्रमाणे प्रमाणान्तरं पुनस्तत्प्रमाणे प्रमाणान्तरमन्येन प्रदर्शनीयमिति पुनरप्यनवस्थानाद् अप्रदर्शने च तत्रैव वक्तव्यतायाः तेस्सर्वाभेदे पर्यवसानादित्यर्थः ।

ना(१)मनुपनयत(२)स्तत्रापि श्रुतिविषयाऽनुपन्यासात्; तथा "व्यापारं यदिद"मित्यादावेव तात्पर्यम् ॥ या या बुद्धिः सा सा स्वविषयाद्भिन्ना घटपटौ भिन्नावर्तिबुद्धिवदिति त्रिचतुःकक्षायां बुद्धिधारायां व्याप्तिधारणादन्तिमबुद्धावपि तद्बलात्स्वविषयभेदसिद्धौ क्व श्रुतेरवकाश इत्याशङ्कते—। *f* "अथे"ति ॥

मू० "नाद्यः व्याप्तिबुद्धिर्यदि विषयविशेषेपि स्वातन्त्र्येण बाधात्मिकोपेयते तदा सैव विशेषबुद्धिरपि स्यादि[...] गतमनुमानकथया । अथानुमितिमभ्युपैषि, *b* तदा [...] नात्मानमपि धर्मीकृत्य प्रवर्त्तते इति तत्रैव दत्त[...] (३) सर्वामद्वैतश्रुतिः परम्परामालम्बते-इत्युक्तमा[...] ते । *c* अथ * सर्वा विवादाध्यासिता बुद्धयः स्व[...] षयेभ्यो भिन्ना, बुद्धित्वाद्, घटपटबुद्धिवदिति [...] मान्याकारेणात्मानमपि धर्मीकृत्यात्मनोपि स्ववि[...] याद्भेदं साधयिष्यत्यनुमा ? *-इति मन्यसे, मैव[...] एवमपि विषयिणो विषयस्याऽभेदं बोधयन्ती श्रु[...] रनुमानमप्यनवकाशयति ।

टी० व्याप्तिधीरेव तत्र प्रमाणम्? तदुपलम्भादनुमानं वा प्रमा[...] —इति विकल्प्य दूषयति(४)—। *a* "नाद्य"इति । व्याप्तिग्राहकप्रमा[...] विशेषोपस्थितौ सामर्थ्यनुमानं प्रमाणमनवकाशमेव(५) स्यादित्य[...]

(१) सर्वथापि भेदस्याऽसंभाव्यमानत्वे ऽभेदोपि श्रुत्याऽशक्योद्भावनः [...] भेदसंभावनापूर्वकस्यैव तस्य वक्तव्यत्वेन यथायथा भेदसम्भावनायामनवस्था त[...] तदभेदबोधनेपि पर्यन्ततो यत्रैवाऽभेदो न बोधनीयस्तदारभ्याऽऽमूलमभेदलोप इ[...] त्याद्य-संभावनेति ।

(२) "अपनयतः"-इत्यपि क्वचित्पाठः ।

(३) तत्रैव दत्तपदा द्वैतश्रुतिः सर्वामद्वैतपरम्परामालम्बते-इति सम्ब[...]

(४) आद्यं पक्षं दूषयतीत्यर्थः ।

(५) पक्षधर्मताबलेनाऽनुमानेनैव हि वन्ह्यादेः पर्वतीयत्वादितत्तद्विशे[...] व्याप्त्यैव च तत्सिद्धावनुमानं निरर्थकमेव स्यादित्यर्थः ।

अन्तिमबुद्धिः स्वविषयाद्भिन्ना बुद्धित्वादाद्यादिबुद्धिवदित्यनुमानं तदुपस्थापकमिति द्वितीयमाशङ्क्य निराकरोति–। [b] "तदे"ति। अनुमितावेव पदमारोप्याऽद्वैतश्रुतिः सर्वाभेदबोधिका तर्हि स्यादित्यर्थः॥ नन्वनुमितिमपि पक्षेन्तर्भाव्य विषय भेदः साधनीय इति तत्र श्रुतिप्रवृत्तिरनुपपन्नेत्याशङ्क्य ते– [c] "अये"ति॥ एतावता च विषयाद्बुद्धेर्भेदः सिद्धो नतु बुद्धेरपि विषयस्य, अप्रतिज्ञानात्, तथा च बुद्धितो विषयस्याभेदबोधने निष्प्रतिपन्थिनी श्रुतिः सर्वाभेदबोधने पर्यवस्यतीति परिहरति–। [d] "एवमपी"ति॥

**मू० "विषयिविषययोर्मिथो भेदेपि साध्ये अस्तु हेत्वनुयोगः(१)। [b] परबुद्धिस्तद्विषयांश्च प्रति निराबाधा सती श्रुतिरेकस्या बुद्धेर्विषयादपरामपरस्याश्च विषयात्परामभेदबोधाय धावन्ती सर्वाद्वैते एव पर्यवस्यतीति। * [c] नच शक्यमनुमातुं–सर्वस्या बुद्धेर्विषयात्सर्वा बुद्धिर्भिन्नेति *, [d] मा भूदन्यबुद्धिविषयादात्मनोपि (२) बुद्धिर्भिन्नेति। * नचात्मव्यतिरिक्तादित्युक्ते निस्तारः स्यात्*, अद्वैतवादिनः सर्वाभेदमिच्छतः क्वचिदपि तदसिद्धा(३)विशेषणाऽप्रसिद्धेरिति। [e] एतेन "सर्वं भिन्नम्"–इति वाक्येन, विना बाधं स्वतः प्रमाणेन, सत्प्रतिशब्दा (४) सेयमद्वैतश्रुतिरित्यप्यनवकाशं प्रत्यवस्थानं मन्तव्यं, [f] यस्मात्कस्मादपि भेदे मिथ्यातः (५)सत्यभेदोपगमेन [g] सिद्धसाधनात्;**

---

(१) हेत्वनुयोगः हेत्वाभासत्वमित्यर्थः। यद्वा, हेतुविषयकः पर्यनुयोगः (विचारः)–किं बुद्धित्वं हेतुः ? विषयत्वं वा ?–इत्यादिरूप इत्यर्थः।

(२) अन्यबुद्धिविषयादात्मनोपि (सकाशाद्) बुद्धिर्भिन्ना मा भूदिति (हेतोः) सर्वस्या बुद्धेर्विषयात्सर्वा बुद्धिर्भिन्नेति नच शक्यमनुमातुमिति सम्बन्धः।

(३) आत्मव्यतिरिक्तत्वासिद्ध्येत्यर्थः।

(४) प्रतिद्वन्द्विहेतुना सत्प्रतिपक्षितत्वमदस्ति–"सर्वं भिन्नम्"इति प्रतिद्वन्द्विशब्दो यस्याः श्रुतेः सा तथा।

(५) ब्रह्म मिथ्या न–इति मिथ्याभूताद्घटपटादेः सत्यस्य ब्रह्मणो भेदोपगमेन सिद्धसाधनादित्यर्थः।

टी० ननु 'बुद्धिविषयौ मिथो भिन्नावि'त्येव प्रतिज्ञेयमिति न श्रु श्रुतिप्रवृत्तिरित्याशङ्क्य निराकरोति-। a"विषयी"ति। अत्र बुद्धित्वं न हे विषयभागेऽसिद्धे, विषयत्वं न हेतुः, बुद्धिभागेऽसिद्धेः, । उभयगतं प्रमेय दिकं व्यभिचारीत्यर्थः ॥ अभ्युपेत्य दूषयति-। b"परे"ति। स्वस्वविष न्मिथो भेदसिद्धावपि परविषयेण सह भेदाग्रहात्तत्रैव श्रुतिप्रवृत्तिः द्वैतपर्यवसायिनीत्यर्थः ॥ ननु सर्वा बुद्धयः सर्वबुद्धिविषयभ्यो भिन्ना, त्वात्; सर्वे विषयाः सर्वबुद्धिभ्यो भिन्ना, विषयत्वादिति परस्परं विषययोर्भेदसिद्धौ न श्रुतेरवकाश इत्यत आह- c"नचे"ति ॥ तत्र स्वव्यतिरिक्ताद्विषयाद्भिन्नेति साध्यते? विषयमात्राद्वा -इति विकल्प तीयं दूषयति-। d"मा भूदि"ति॥ बाधं व्युदस्य सत्प्रतिपक्षं व्युदस्यति "एतेने"ति।यद्यपि लौकिकवाक्यात् श्रुतेरेव बलवत्त्वमिति न तेन प्रति तथापि वाक्यार्थे श्रुतितात्पर्यग्रहे सति तथा, नतु तात्पर्याग्रहदशाया तद्बलवत्तेति भावः ॥ f"यस्मादि"ति। यद्यपि मिथ्यात्(1) इत्या तच्च न भेदप्रतियोगि, तथापि मिथ्यासत्यभेदव्यवहारस्त्वयाप्यनु इति भावः ॥ g"सिद्धसाधनादि"ति। मिथ्याप्रतियोगिभेदबोधक कवाक्येन सत्यसकलाऽभेदबोधकश्रुतेः सामञ्जस्यादित्यर्थः ॥

मू० a"सर्वस्मादिति स्वतोऽप्यापत्तेः; स्वव्यतिरिक्ता चाद्वैतवादिन्यव्यवच्छेदकम। तदेवम्-

b हेत्वाद्यभावसार्वज्ञ्ये सर्वं पश्यताऽऽस्थिते।
किञ्चित्तु त्यजता दत्ता सैव द्वाराऽद्वयश्रुतेः ॥ ९

अत एव च-

c आद्यधीवेद्यभेदाया अप्यन्यथानुपपन्नता।
स्वज्ञानापेक्षणादन्ते बाधते नाद्वयश्रुतिम ॥ १०

(1 "मिथ्यात्"-इत्यत्र मिथ्यापदप्रतिपाद्यं वस्त्वप्यलीकमित्यर्थः। यद्यपि न्तिकसिद्धान्ते मिथ्याऽलीकयोर्भेदः, तथापि पारमार्थिकत्वेन नित्यालीकत्वं भेद योगित्वं चाऽभिप्रेत्यैतदुक्तम्।

[d]न च संस्कारारूढदृष्टान्वयव्यतिरेकान्वयव्यतिरेकान्वयप्रतिपत्त्युत्पत्तिप्रतिबन्धः शक्यशङ्कः।

टी० ननु 'सर्वस्मात्सर्वं भिन्नमि'त्युक्ते क्व सामञ्जस्यमित्यत आह—। [a]"सर्वस्मादि"ति। तस्यापि(१) सर्वपदार्थान्तर्गतत्वादित्यर्थः। यद्यपि ब्रह्मणो यतःकुतश्चिदद्वैतसाधने स्वस्मादेव तत्सिद्धौ सिद्धसाधनं, सर्वस्मादद्वैतसाधने मिथ्यात्वोऽप्यद्वैतासिद्धिप्रसङ्गः, तथापि स्वसाक्षिक(२)मेव ब्रह्मेत्येव हृदयम्॥ [b]"हेत्वादी"ति। आदिपदेन दृष्टान्तोपग्रहः। सर्वपक्षीकरणं सार्वज्ञ्यमन्तरेणानुपपन्नमित्यर्थः। आस्थिते= वीक्षते। एतद्दोषद्वयभयेन यदि पदार्थात्किंचिद्बहिर्भाव्यं तदा श्रुतिप्रवेशे तदेव द्वारं स्यात्तत्रैव सावकाशा श्रुतिः सर्वाद्वैतं बोधयिष्यतीत्यर्थः॥ [c]"आद्ये"ति। आद्या धीः='घटपटौ भिन्नावि'ति भेदधीः, तद्विषयो यो भेदो=घटपटभेदः, तदीयान्यथानुपपन्नता=तदन्यथानुपपत्तिः, सापि शेषं गत्वा नाद्वयश्रुतिं बाधते, कुतः? स्वज्ञानापेक्षणात्(३),तथा चानुपपत्तिज्ञाने(४)सावकाशा श्रुतिः सर्वाद्वैतपर्यवसन्ना स्यादित्यर्थः। यद्यप्यन्यथानुपपत्तिज्ञाने त्वयोपनीय दत्ते तदैव(५) तद्भेदग्रह इति न श्रुतेरवकाशः, यदि सर्वं भिन्नं स्यात्तदा 'घटपटौ भिन्नावि'ति प्रत्यक्षेण गृहीतो घटपटयोरपि भेदो न स्यादित्यनुपपत्तिज्ञानेन सकृद्बाधिता श्रुतिस्तत्रापि न सावकाशा, तथापि "तत्स्वप्रकाशपरमार्थचिदेव भूत्वे"त्यत्र तात्पर्यम्॥ उत्पन्नश्रौताद्वैतधीबाधं निरस्याऽयोग्यताज्ञानात्तदुत्पत्तिप्रतिबन्धं निरस्यति—। [d]"नचे"ति। भूयोदर्शनप्रभवसंस्कारारूढोऽन्वयः=सत्त्वं, यस्य व्यतिरेकस्य=भेदस्य, तस्य यावन्वयव्यतिरेकौ, ताभ्यां योऽन्वयः=संबन्धो व्याप्तिलक्षणो—यो घटादिः स पटादेर्भिन्नो

(१) स्वस्यापीत्यर्थः।

(२) स्वसाक्षिकं = स्वतः सिद्धं, न तु तत्र साधनान्तरापेक्षेति भावः।

(३) अयमर्थः—प्रतीयमानैवाऽनुपपन्नता भेदं साधयतीति वाच्यम्, यथानुपपत्तिदर्शनादुपपादके बुद्धिरर्थापत्तिः इति स्वीकारात्; तथा चानुपपत्तेः स्वगोचरज्ञानात्स्वभेदाप्रसाधकत्वेन तत्रैव दत्तपदा श्रुतिः सर्वाऽद्वैते पर्यवस्यतीति।

(४) अनुपपत्तिविषयकज्ञाने इत्यर्थः

(५) अनुपपत्तिविषयकज्ञानसमकालमेव तयैव ज्ञातयानुपपत्त्या स्वविषयकज्ञानादपि स्वस्य भेदो गृहीतः, अभेदे हि प्रत्यक्षसिद्धो घटपटयोरपि भेदो न सिद्ध्येदित्यर्थः।

यः पटादिर्न सो घटादिरित्येवमाकारः, तेन व्याप्तिप्रत्ययेन प्रतिपन्ने
बुद्धेरुत्पत्तिप्रतिबन्धो न शक्यशङ्क इत्यर्थः । यद्वा, संस्काराद्दृढोऽन
दृढान्वयो=दृढपदो, यो व्यतिरेको=भेदस्तस्यान्वयो 'भिन्नमिदं'
ज्ञानं, व्यतिरेकश्चाऽ'भिन्नमि'ति निश्चयस्ताभ्यामन्वयप्रतीतेः=श्रौतं
प्रतीतेरुत्पत्तिप्रतिबन्धो न शक्यशङ्क इत्यर्थः। सर्वलोकप्रसिद्धभेदप्रमा(
दद्वैतश्रुत्या संसर्गबोध एव न संभवत्ययोग्यतानिश्चयादिति भाव
यद्यपि यत्रक्वचिदुत्पन्नं भेदप्रत्यक्षमेव सर्वाद्वैतप्रतिपादकश्रुतिबाधकं
श्रौतप्रतिपत्त्युत्पत्तिप्रतिबन्धः शक्यशङ्क एव, तथाप्युत्पत्तिप्रतिबं
स्वप्रकाशप्रामाण्यावष्टम्भादिदमुक्तम् ॥

**मू० यतः—**

**[a] "अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि।**
**अबाधात्तु प्रमामत्र स्वतःप्रामाण्यनिश्चलाम्॥**
**[b] असंसर्गाग्रहस्यापि मन्ता शंसत्यबाधिते।**
**अत्यन्ताऽसदसंसर्गाग्रहं संसर्गलग्नकम्॥ ११**

टी० "अङ्गुल्यग्रे करिशतं विहरति" "मम कर्णकुहरं प्रविश्य
क्रीडती" त्यादिशब्दादुत्पद्यमानस्य ज्ञानस्यानुभवसिद्धतया शाब्द
योग्यताज्ञानस्यायोग्यताज्ञानविरहस्य वा न जनकत्वं, किंतु, ज्ञानमु
मानं विषयबाधादप्रमाणतया, तदबाधात् प्रमाणतया, व्यवहर्तुं
प्रकृते च विषयबाधो नास्त्येवेत्याशयवानाह—। [a] "अत्यन्ते"ति। प्रमां
करोतीत्यनुपपद्यते । प्रत्यक्षादिबाधस्त्वाशङ्क्य निरस्त एवे ति भावः
अयोग्यतास्थले संसर्गज्ञानं नोत्पद्यते, व्यवहारस्त्वसंसर्गाग्रहमात्रा

(१) भेदज्ञानं यदि प्रमा स्यात्तदाऽयोग्यताज्ञानाच्छ्रुत्या संसर्गबोधो नोत्प
न्नस्त्वेतदस्ति, भेदस्य खण्डितत्वादित्यर्थः। अत एव 'यद्यपी'त्यनेन भेदप्रत्यक्षमेव श्रु
धकमित्युक्तमपि साधु संगच्छते। वस्तुतस्तु, भेदप्रमैव यदि स्यात्तदा श्रुत्या संसर्गो
स्यात्, नत्वेतदस्ति, भेदाऽभेदप्रमयोरुभयोरपि लोकसिद्धत्वात् तथाच यत्रैवाऽभे
तत्रैव दत्तपदा श्रुतिः तत्राऽभेदे पर्यवसास्यति, नातस्तया संसर्गाऽबोधः—एताद
र्थे यद्यपीत्यनेन 'यत्रक्वचिदि'ति, 'सर्वाऽद्वैते'ति च प्रतिपादनं साधूपपादितं

इत्यत आह—। [b] "असंसर्गाग्रहस्ये"ति । असंसर्गाग्रहस्य मन्ता मीमांसकः, स चात्यन्तमसत्त्वऽसंसर्गः सत्यस्थले, तस्याऽग्रहो यत्र तत्र तु संसर्गभ्रममेव मन्यते, तथाच तन्मतेऽप्यद्वैतश्रुत्या संसर्गभ्रमैव जननीया, विषयाऽबाधादित्यर्थः । सदसंसर्गाग्रहस्तत्र नास्त्येव, विषयबाधस्य निरस्तत्वादिति भावः ॥

मू० "अनौचित्या(१)पि तर्केण दुर्बाधैवाद्वयश्रुतिः ।
अनारोपितमूलत्वाद्बलवत्त्वादतादृशात् ॥ १३ ॥
[b] प्रवृत्तेना(२)प्यनौचित्यमूलं येन न लूयते ।
तत्राऽनौचित्यसाम्राज्यं वैपरीत्यात्तु नात्र तत् ॥१४॥

टी० नन्वनौचित्यऽविनिगमकल्पनालाघवकल्पनागौरवाणां तर्काणां, तर्कप्रतिरूपकाणां(३) वा, प्रमाणसहकारित्वमुभयवादिसिद्धं, तथाचाऽनौचितीतर्कस्य सकललोकसिद्धभेदतिरस्काराऽनर्हत्वलक्षणस्य प्रकृते सत्त्वाद्द्वयग्राहिप्रत्यक्षमेव बलीयो, नत्वभेदविषया श्रुतिरित्यत आह—। [a] "अनौचित्ये"ति । तर्कस्याहार्यारोपरूपतया तदपेक्षया श्रुतेरनारोपितमूलाया बलवत्त्वमिति तर्कापलब्धप्रमाणापेक्षयापि तथेत्यर्थः । अतादृशात्-आरोपितमूलेनेत्यर्थः । केचित्तूद्भावितनिग्रहस्थानेनैवोद्भावितनिग्रहस्थानपरिहारोऽनौचितीतर्कः(४)श्रुतेर्बाधकः स्यादित्याशङ्काभाग इत्याहुः । तच्चिन्त्य-

(१) सकललोकसिद्धो भेदस्तिरस्कर्तुमनुचितः—इत्यनौचितीतर्कः, उचितस्य भाव औचिती, न औचित्यनौचितीत्यक्षरार्थः । अनौचित्यमित्यदन्तापि तत्समाख्या ज्ञेया ।

( २ ) प्रवृत्तेनापि येन प्रमाणेनाऽनौचित्यस्य मूलं न लूयते=न खण्ड्यते, तत्रैवाऽनौचित्यस्य साम्राज्यं=स्वार्थसाधनसामर्थ्यं भवति, अत्र तु तद्वैपरीत्यात्=अद्वैतश्रुत्याऽनौचित्यमूलस्य पारमार्थिकभेदनिष्ठसर्वजनसिद्धत्वस्य लवनात्, न तद्=अनौचित्यस्य साम्राज्यमित्यर्थः ।

( ३ ) तर्कप्रतिरूपकाणां =तर्कसदृशानां, न तु तर्काऽऽभासानामित्यर्थः, तेषां प्रमाणविरोधित्वेन प्रमाणसहकारित्वस्याऽसम्भवात् ।

( ४ ) पूर्वपक्षिणोद्भावितं श्रुतिबाधलक्षणं निग्रहस्थानमपरिहृत्य बाधत्वेन तदभावेन श्रुत्या प्रत्यक्षबाधलक्षणेन निग्रहस्थानेन यस्तस्य परिहारः ( प्रतिबन्दी ) वेदान्तिकस्य, साऽनुचितेत्यनौचितीतर्क इत्यर्थः । यद्वा, येनैव घटपटादिभेदावगाहिप्रत्यक्षबाधलक्षणेन निग्रहस्थानेन श्रुतिर्बाध्यते तेनैव प्रत्यक्षप्रतियोगिकविषयानुयोगिकाभेदाबाधनादभेदस्यावच्छिन्नाऽभेदावगाहिश्रुतिबाधोऽपि बाध्यते इत्युद्भावितनिग्रहस्थानेनैवो-

म्(१) ॥ नन्वेवमनौचित्यतर्को नास्त्यत्र, तथाच "दोषं व्यक्तिविवेके[illegible] लोकविलोचने"(२)इत्याद्यग्रे(३)यदुक्तं तदनुपपन्नं स्यादित्यतः सदसत्त्वयोर्विषयं विवेचयति—। "प्रवृत्तनापी"ति । अनौचित्यमूलं हि [illegible] सर्वजनसिद्धत्वं, तच्च(४)श्रुत्या पारमार्थिकमद्वैतं बोधयन्त्या मूलं व्या[illegible] कभेदपरं कृतं, तथाचापारमार्थिकभेदमादाय सर्वलोकसिद्धव्यवहारो[illegible] नाऽनौचित्यमिति भावः। "अनौचित्यमूलं व्याप्यव्यापकभावः, तस्य [illegible] मद्वैतश्रुत्ये"त्यपव्याख्यानम्(५), अनौचित्यस्य व्याप्यव्यापकभावमात्र[illegible] प्रवृत्तः, तत्प्रवृत्तौ वा तत्परत्वे सर्वानौचित्यखण्डने खण्डनकार[illegible] "विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रत"मित्यादेरनवकाशापत्तेः।" [illegible]वितनिग्रहस्थानेने"त्यादिस्वोक्तिविरोधाच्च(६) ॥

मू० "* ननु यद्यदेवोदाह्रियते त्वया—नेत(७)इतो [illegible] गृहीत इति ततोऽस्याद्वैताम्नायैरभेदबोधने [illegible] सर्वाभेदे पर्य्यवसातव्यम्—इति. ततस्ततस्त[illegible] स्तदैव गृह्यते मया, तस्मादुदाह्रियमाणतायाम[illegible] ह्रियमाणतयां च कस्यचिदेतत्प्रत्यवस्थान[illegible]

---

अभावितनिग्रहस्थानपरिहारो वेदान्तिकस्यानुचितः, घटपटाद्यभेदांशे श्रुति[illegible] सत्त्वाभावाद्—इत्यनौचितोतर्कः। अथवा, उद्भावितं निग्रहस्थानं बाधाविरु[illegible] वादिः,तथा च स्वयं बाधितेन तर्कादिना बाधपरिहारेऽनुचित—इत्यनौचिती[illegible]

(१) चिन्ताबीजं तु स्वमतं दोषमनुद्धृत्यापि प्रतिबन्द्यावेदान्त[illegible]

(२) "काव्यमीमांसिपु प्राग्रमहिमा महिमाऽऽदृत"—इत्युत्तरार्द्धम्। [illegible] हिमानामकः कश्चिदालङ्कारिकः काव्यमीमांसाऽभिज्ञेपु प्राग्रमहत्त्वः स्वीयव्यक्ति[illegible] मके ग्रन्थे ऽमुं दोषमनौचित्याख्यम् आदृत=पुरस्कृतवान्। किंभूते ग्रन्थे? [illegible] लोचने, कविलोकानां चक्षुर्भूते, अनया कारिकया खण्डनकारेणाऽनौचित्ये [illegible] र्यते।

(३) चतुर्थपरिच्छेदस्याऽवसाने।

(४) तच्च मूलमिति सम्बन्धः।

(५) केचित्त्वित्यनेन पूर्वमुक्तस्यैवेदमपव्याख्यानं द्रष्टव्यम्।

(६) नहि उद्भावितनिग्रहस्थानतत्परिहारयोर्व्याप्यव्यापकभावोऽस्ति [illegible] दोषानौचित्यप्रवृत्तिः स्यादिति भावः।

(७) इतइतः=अन्त्यबुध्यादितः, अस्य=उपान्त्यबुध्यादेः। सर्वाऽभेदे [illegible] तव्यमिति यद्यदेव त्वयोदाह्रियते—इति सम्बन्धः। ततस्ततः=अन्त्यबुध्यादितः [illegible] उपान्त्यबुद्ध्यादेर्भेदस्तदैव=कथाकाले एव मया गृह्यते इत्यर्थः।

इति * ? । मैवम् । [b] अन्तिमबुद्धेरद्वैतश्रुतिजबुद्ध्या-दितो भेदो न त्वया प्रमित-इति मयोच्यमाने यस्तदीयस्ततो भेदः प्रमातव्यः सन तावत् प्रत्यक्षेण, तत्कालमन्तिमबुद्धेरनुपस्थितेः । [c] यदि च केनचिद्धेतुना वा कयाचिदनुपपत्त्या वा तथा स्यात् तदानीमद्वैतवादिनं प्रति हेतोः साध्याऽविशिष्टतया (१), अनुपपत्तेश्च येन विना सा तदविशिष्टतया, ततःकथमाभासात् प्रमोदयः स्यात् ।

टी० सिंहावलोकितन्यायेन शङ्कते– [a] "नन्वि"ति । कस्यचिद्वस्तुनोऽनुदाह्रियमाणतायां श्रुतिव्यवस्थापनानवकाशः, उदाह्रियमाणतायां भेदग्रहापत्तिरिति(२)प्रत्यवस्थानं खण्डनमस्थाने ऽयुक्तमित्यर्थः ॥ मयोदाह्रियमाणाया अन्तिमबुद्धेः प्रत्यक्षादिना केनापि प्रमाणेन कथायां भेदः साधयितुमशक्य इति परिहरति– [b] "अन्तिमे"ति । यद्यप्यन्तिमबुद्धेरुदाहरणेऽन्तिमत्वव्याघातो, ऽनुदाहरणे श्रुत्यव्यवस्थापनं, मानसप्रत्यक्षेण ततो भेदग्रहश्च तदुदाहरणे, वाक्यजज्ञानसहकृतस्य मनसो बहिरपि प्रवृत्तेः, कविवाक्यवत्(३),तथापि तस्य(४)प्रमाणान्तरत्वापत्तिः ; न वा तादृशप्रत्य(५)प्रमाणं, तादृश(६)मानसप्रत्यक्षेण सह भेदाग्रहात्तत्रैव श्रुतिप्रवृत्तिरिति

(१) हेतोः साध्याऽविशिष्टतया (साध्याऽभिन्नतया) तत आभासात्कथं प्रमोदयः स्यात्, अनुपपत्तेश्च येन (उपपादकेन) विना सा=(अनुपपत्तिर्भवति) तदविशिष्टतया तत आभासात्कथं प्रमोदयः स्यादित्यन्वयः ।

(२) इतिशब्दो हेतौ ; इति हेतोः कस्यचिदपि वस्तुनः प्रत्यवस्थानं = खण्डनमयुक्तमित्यर्थः ।

(३) यथा कवीनां = क्रान्तदर्शिनां, मानसज्ञानसहकृतं वचोऽतीताऽनागतविप्रकृष्टव्यवहितसूक्ष्मवस्तुषु प्रतिपादकत्वेन सर्वत्रैव प्रवर्तते तद्वदित्यर्थः ।

(४) मानसप्रत्यक्षस्येत्यर्थः ।

(५) बाह्यार्थगोचरमानसप्रत्यक्ष इत्यर्थः ।

(६) किञ्च, मनसाऽन्त्यबुद्ध्यादित उपान्त्यबुद्ध्यादेर्भेदग्रहेऽपि स्वप्रतियोगिको भेदो न गृह्येत इति तत्रैव लब्धपदा श्रुतिः सर्वाऽभेदे पर्यवस्येदित्याह–तादृशेति ।

भावः ॥ ननु प्रत्यक्षाभावेऽप्यनुमानमर्थापत्तिर्वा स्यादित्यत आह–"न च" इति । हेतुना=बुद्धित्वादिना । अनुपपत्त्या=प्रथमगृहीतभेदानुपपत्त्या । अनुमानपक्षे–'हेतोरि'ति ; अर्थापत्तिपक्षे–'येन विने'ति । स्यार्थापत्तेर्वा भेदमादाय प्रवृत्तेरद्वैतवादिनं प्रति तदुपन्यासानर्हत्वादिति भावः ॥

मू० "*नच वाच्यं स्वयं मया स भेदो ज्ञायते इति,* पात्तिकोऽपि (१) मां प्रत्यसिद्ध्यादिरिति *, यतो त्वद्वचनस्य वैयर्थ्यापत्तिः, 'वचनस्य परार्थत्वात् मवलम्ब्यावतिष्ठमानश्च भवानऽप्रतिभातो न * नच स्वयं मया प्रमितो भेदः परं प्रति वचसा बोध्यते इति वाच्यम् *, त्वद्वचसि परस्याप्रत्य विजिगीषुं परं प्रति विजिगीष्वन्तरवचनं हि तज्जिज्ञासोत्पादनद्वारेण तस्य स्वतस्तदर्थप्रमित्युत्पादनपर्यवसायितयोपयुक्तम्, नचाद्वैतवादिनं प्रति कर्त्तुं शक्यते, तं प्रत्यन्यतरासिद्ध (२) रुक्तत्वात् "नच वाच्यं मम वचनात्सन्देहेनापि श्रुत्या तत्र घबाधितभावया नाभेदप्रतिपादनं ते घटते इ यस्मादद्वैतं मन्यमानेन भेदासिद्ध्या सर्वत्र साऽविशेषादिदोषप्रतिसन्धायिना संशयस्याप्यनर्थीकरणमेव स्यात् ।

टी० अनुमानमर्थापत्तिर्वा नाद्वैतवादिनं प्रत्युपन्यस्यते, किं स्वत एवात्तिमबुद्ध्या सहभेदोऽनुमीयते इति ब्रूम इत्याशङ्क्य परिहा

(१) परार्थाऽनुमानपक्षे एवाऽसिद्ध्यादिर्दोषो न स्वार्थानुमानपक्षेऽपीति

(२) अन्यथाऽनुपपत्त्या भेदसाधने उपपाद्योपपादकयो र्भेदस्याऽसिद्धेः तत्साधने च साध्यसाधनयोर्भेदस्याऽसिद्धेरित्यर्थः ।

"नच वाच्यमि"ति ॥ [b]"अस्ये"ति। स्वयं मया स भेदो ज्ञेय इत्यस्येत्यर्थः॥
यर्थे हेतुमाह—। [c]"वचनस्ये"ति। परस्य चाद्वैतवादिनये ऽभावादिति
वः। यद्यपि यथाऽद्वैतवादिनं प्रत्यनुमानमनवकाशं तथा भेदवादिनं
ति शतशः पठ्यमानाप्यद्वैतश्रुतिरनवकाशा, तेन सर्वत्र भेदग्रहात्।
चित्प्रत्यक्षतः, क्वचिदनुमानात्, क्वचिदागमाद्, अर्थापत्तेर्वा तस्य यथा-
थं भेदग्रहसंभवात्। "मया तावदद्वैतश्रुतिभिरद्वैतं प्रतिपाद्यते"—
त्यपि त्वद्वचनं भेदवादिनं प्रत्यनवकाशमेव। नहि यस्य तादृशश्रुत्यर्थे-
श्रद्धा, तस्य त्वद्वचसि श्रद्धा। भेदप्रतिपादकप्रत्यक्षाद्याभासीकरणमपि तं
त्यतन्त्रं, तेन स्वनयेन सर्वेसामञ्जस्यकरणात्; तथापि स्वप्रकाशे ऽद्वैते
त्पर्यम्॥ ननु मद्वचनेन निर्णयस्तत्र मा भूत संशयोपि स्यादेव, तावतैव
तिरनवकाशेत्यत आह—। [d]"नच वाच्यमि"ति। प्रत्यक्षादौ बाधकमाने(१)
पिडते श्रुतिलक्षणसाधकप्रमाणे च सति बाधक(२)साधकमानाभावलक्ष-
यां संशययोग्यतायां निरस्तायां संशय एव नास्ति, भवन्वा न स प्रमा-
परिपन्थीति भावः। यद्वा, श्रुतिपरिपन्थिना केनचित्प्रमाणाभासेनापि
दि द्वैतमुपस्थाप्येत तदा संशयः स्यात्, तच्च नास्त्येव, प्रत्यक्षस्य निर-
त्वात्; अनुमानादेः साध्याऽविशेषादिदोषग्रस्तत्वात्; अन्ततो भेदाभा-
न तद्घटितविरोधाभावेन विरुद्धनानाकोटिकस्य संशयस्याप्यद्वैतवादिनं
त्यनवकाशादित्यर्थः॥

सू० "तस्मात्—

एकं ब्रह्मास्त्रमादाय नान्यं गणयतः क्वचित्। आस्ते न
धीरवीरस्य भङ्गः सङ्गरकेलिषु॥१९॥' अपि च(३), प्रतीयते

(१) अत्र बाधकमानं श्रुतेर्बाधकं ग्राह्यं, न तु संशययोग्यताकुक्षिनिविष्टं, तथा
ऽबाधिताऽद्वैतश्रुतिसद्भावे साधकमानाभावः कथमिति भावः।

(२) बाधकेन जनितं मानं बाधकमानं (बाधः) साधकेन जनितं मानं साध-
मानं (सिद्धिः) तदुभयाभावलक्षणायामित्यर्थः।

(३) परकीयबुद्धिविषयस्य विशेषरूपेण साक्षात्कारसम्भवे बुद्धिविषययोर्भेदः
रेण गृह्येत, भेदज्ञाने विशेषरूपेण धर्म्यादिज्ञानस्य हेतुत्वात्, नत्वेतदस्तीत्याह-अपिचेति।

तावदिदं सामान्यतो, यन्नाम किंचित्परश्चेतसा [illegible]
यन्नस्तीति, किंचिद्वा विवक्षुरित्यादि; तत्र [illegible]
बुद्धिविषयो विवक्षाविषयो वा विशेषतो विशि[illegible]
विना नैव प्रतीयते, ततोन्तिमबुद्ध्यादिभेदो न [illegible]
शक्यभ्रमः, परेण(१)तच्चिन्तनादेरपि संभव[illegible]
स्वस्मात्स्वस्य भेदस्याभावात्। ततस्तत्र लब्धपदा[illegible]
मद्वैतश्रुतिर्विश्वाभेदे पर्य्यवस्यन्ती त्वया शक्य[illegible]
स्यात्। तस्मात्—

'कथं सामान्यतो(२)ज्ञाते नैव ज्ञाते विशेषतः।
पदरोधस्त्वया कर्त्तुं शक्यः स्याद्द्वयश्रुतेः॥ [illegible]

टी० सर्वप्रमाणापेक्षया श्रुतेर्बलवत्त्वेन तद्विषयस्य बलवत्त्वा[illegible]
वादिनोपि बलवत्त्वमित्युपसंहरति—। [a] "तस्मादि"ति॥ यत्र विषये
वादिना भेदो दुर्ग्रहस्तत्र श्रुतेः प्रवृत्तिमाह—। [b] "अपि चे"ति। परेण[illegible]
मानस्य वस्तुनः (यतो भेदो ग्राह्यः) 'तदेव परेणेदानीं चिन्त्यते' इति [illegible]
ष्यानवधारणाद्भेदो दुर्ग्रह इति तदेव(३)श्रुतिविषय इत्यर्थः। यद्यपि[illegible]
स्ततो भेदाग्रहेपि यत्र क्रमेण भेदं गृहीत्वा श्रुतिरपसारणीया, [illegible]
कदा न गृह्यते तच्च कदापि गृह्यते, प्रवृत्तं वा प्रमाणं पश्चात्प्रवृत्ति[illegible]
वता प्रमाणेन नाऽपसार्य्यते, परिचिन्त्यमानत्वावच्छेदेन(४)) तत्रा[illegible]
भेदः सुग्रह एव, वस्तुतस्तस्यान्त्यबुद्धित्वादित्यन्यदेतत्, तथापि श्रुते[illegible]
तस्तत्रावकाश इतिहृदयम्॥ उक्तमर्थं संकलयति—। [c] "कथमि"ति।

(१) परेण = भेदप्रमात्रा, तच्चिन्तनादेः = धर्मिप्रतियोगिचिन्तनादेरभा[illegible]
त्वात्तस्य च विशेषरूपेण प्रकृतेऽभावात्ठित भावः।

(२) सामान्यतो ज्ञाते विशेषतश्च न ज्ञाते कथमद्वयश्रुतेः पदरोधः कर्त्तुं [illegible]
इत्यन्वयः। क्वचित्तु "नैव सामान्यतो ज्ञाते"—इति पाठः।

(३) अभिन्नं वस्त्वित्यर्थः।

(४) परिचिन्तनस्य परिचिन्त्यमानाद्भेदे साक्ष्ये परिचिन्त्यमानत्वा[illegible]
तत्रापि = परकीयबुद्धिविषयेपि, बुद्धिभेदः सुग्रह एवेत्यर्थः।

मू० * [a]ननु भेदमनङ्गीकुर्वतो भवतः कथं तत्तत्पदपदार्थवैचित्रीव्यवहारो न व्याहन्यते ? * । [b]कथं व्याहन्यते, प्रतिबध्यते हि तत् । [c]किंच, योयं त्वया व्याघात आपादनीयः सोपि कस्माचिदापादकात्, नचापाद्यापादक-मभिद्यमानमापत्त्यै प्रभवेदिति । तस्मात्–

[d]नानात्व(1)मवलम्ब्यापि वदत्यद्वैतवादिनि ।
असिद्धभेदाद्व्याघातः पतेदापादकात्कुतः ॥१७॥(2)

---

[e]इदमपि च विचारमर्हति, यदद्वैतश्रुतीनां बाधकमुपन्यस्यते प्रत्यक्षादि घटपटप्रभृतिभेदग्राहि तदपि कीदृश्यर्थे पर्यवस्यति ? । तथाहि–प्रत्यक्षेण योसौ भेदो गृह्यते स किं स्वरूपभेदः ?–१(3)किमन्योन्याभावः ?–२ किं वैधर्म्यं ?–३ किमन्यदेव वा ?–४ । [f]यदि तावत् स्वरूपं भेदः, स नाम(4) घटपटयोर्हि स्वरूपं यत्परस्परस्मा(5)द्भेदः तत्परस्परमनन्तर्भाव्य न संभवति, (भेदो हि

---

(१) नानात्वं व्यावहारिकं, काल्पनिकं वा; नतु पारमार्थिकम् अद्वैतवादिनं प्रति तदसिद्धेः ।

(२) { स्वरूपान्योन्यवैधर्म्यपृथक्त्वेति चतुर्विधो । भेदो न घटतेऽद्वैते वदत्येतत्तु साम्प्रतम् ॥ }

(३) 'स्वरूपमेव भेद'–इति प्रभाकरमतानुयायिनः, 'अन्योन्याभाव'–इति नैयायिकैकदेशिनाम्, भट्टैकदेशिनां मतं–'वैधर्म्य'मिति, वैशेषिकस्य–'अन्यदेवे'ति, पृथक्त्वं गुण इत्यर्थः ।

(४) बहुषु-पुस्तकेषु "स न घटपटयोर्हि स्वरूपम्"–इति पाठः । तत्र स न (स ग्रन्थो नोपपद्यते ) इत्येतावत्पर्यन्तं विरामः कर्तव्यः ।

(५) यच्च तत्परस्परं च यत्परस्परं, यत्परस्परस्माद्भेदस्तत्परस्परमनन्तर्भाव्य तद्विशिष्टो भेद एव न सम्भवति, विशेषणादिव्यतिरिक्तविशिष्टपदार्थानङ्गीकारादित्यर्थः ।

(६) किञ्चित्प्रतियोगिक एव भवतीत्यर्थः ।

भवन् कस्मादपि(६)भवति अन्यथा 'स्वरूपं भेद'- पारिभाषिकं(१)नाम स्यात्) यदा च घटाद्भेदः प- त्येतावानेवार्थः(२) पटादेः स्वरूपं प्रत्यक्षेण गृह्यते- घटोपि पटात्मन्येव प्रविष्ट इति पटघटयोरैक्यात्म- भेदग्राहिणा प्रत्यक्षेणावगाहितमिति विपरीतमाप-

टी० ननु यथानुमानादेः साध्यसाधनादिभेदाधीना प्रवृत्ति- तवादिनं प्रति तदनवकाशस्तथा श्रुतेरपि पदपदार्थवैचित्र्यमुपजीव्य तं प्रति तदनवकाशोपि, प्रत्युत तथा व्यवहरतो व्याघात ए- भेदव्यवहारान्यथानुपपत्त्या भेदसिद्धिरेवान्तत इत्याशङ्कते-। [a]"नन्वि- परिहरति- [b]"कथं व्याहन्यते"इति ॥ आपाद्यापादकयोरभेदाद् त- तापादनं मां प्रत्यनवकाशमित्याह-। [c]"किंचे"ति ॥ पदपदार्थनानात्व- लभ्यापि श्रुतिं प्रमाणयतो मम व्याघातो नास्तीत्याह-। [d]"नान- मि"ति । असिद्धभेदादापादकाद्व्याघातः कुतः पतेदित्यन्वयः ॥

यं भेदं विषयीकुर्वत् प्रत्यक्षादि श्रुतिबाधकं स्यात् स एव कुतो बाध इत्याह-। [e]"इदमि"ति ॥ [f]"यदि तावदि"ति । घटा- स्वरूपं पटस्य,†तच्च घटो† विशेषणम्? उपलक्षणं वा?। आद्ये, घ- पट†स्वरूपं प्रत्यक्षेण गृहीतमिति घटा†भेद एव प्रत्यक्षेण गृहीत- वैपरीत्यमित्यर्थः ॥

मू०*[g]"ननु यथेयं प्रतीतिरभेदोल्लेखितया व्याख्यायते(३) भेदोल्लेखित्वेपि दीयतामस्यां दृष्टिः, अभेदे हि इत्येव, 'पट' इत्येव वा, बुद्धिः स्यात्, नतु 'घटा-

(१) पारिभाषिकं=स्वसङ्केतमात्रसिद्धम् ।
(२) पटाऽनुयोगिकत्वे सति घटप्रतियोगिकत्वविशिष्ट इत्यर्थः ।
(३) व्याख्यायते=व्युत्पाद्यते ।
† अत्र प्रायः पुस्तकेषु घटपटयोर्मौलिकप्रतियोग्यनुयोगिभावक्रमवैपरीत्ये- व्याख्यामुपलभ्य प्रतियोग्यनुयोगिभावमुपेक्ष्यापि, उपन्यास्यं च यथोचितक्रमेण, उ- चिन्हं च † एतत् सर्वत्र व्यवातिष्ठिपम् ।

पट'*?-इति चेत्, [b]स्यादप्येष पर्य्यनुयोगो यद्यविद्याविद्यमानभावं(१) भेदं पारमार्थिकमभेदमिच्छन्तोपि प्रत्यादिशाम । तस्मात्-

[c]अभेदं नोल्लिखन्ती धीर्न भेदोल्लेखनक्षमा ।
तथाचाद्ये प्रमा सा स्यान्नान्त्ये स्वापेक्ष्यवैशसात् ॥१८॥

*[d]अथ 'भेदः'-इत्येतावन्मात्रं पटस्य स्वरूपं, 'घटादि'ति च तद् घटेन प्रतियोगिनाऽन्ये(२)नैव निरूप्यते*?-तदपि नोपपद्यते ।

टी० ननु घटाद्भेदः स्वरूपं पटस्येत्युक्ते घटपटयोर्नो भेदः प्रतीयते, तथा सति 'घटादि'ति न स्यात्, किंतु 'घटः पट'-इति सामानाधिकरण्यं स्यादिति शङ्कते-। "[a]नन्वि"ति ॥ अविद्याविद्यमानं भेदमादाय तथाप्रतीतिरिति परिहरति-। [b]"स्यादि"ति ॥ ननु भेदो न पारमार्थिकः, किंत्वभेदः,-इत्यत्र किं विनिगमकमत आह-। [c]"अभेदमि"ति । घटपटस्वरूपमनुल्लिख्य तदुभयभेदोल्लेखो न संभवति, तदुभयभेदमनुल्लिख्यापि तदुभयस्वरूपोल्लेखः संभवतीत्यभेदग्रह उपजीव्यो भेदग्रहस्येत्यभेद एव पारमार्थिक इत्यर्थः । आद्ये=अभेदे, सा धीः प्रमा, नान्त्ये=भेदे, स्वस्य=भेदग्रहस्यापेक्ष्य=उपजीव्यो ऽभेदग्रहस्तद्वैशसात्तद्विरोधादित्यर्थः । यद्यपि भेदाभेदपदाभ्यामुभयोपस्थितौ विपरीत(३) एवोपजीव्योपजीवकभावः, स्वरूपस्यापि भेदत्वे सर्वधियां भेदोल्लेखित्वस्याऽऽवश्यकत्वे वैपरीत्यमेव, तथापि श्रुत्यवष्टम्भादिदमुक्तम् ॥ उपलक्षणपक्षं कक्षीकृत्याशङ्कते-। [d]"अथे"ति । यदि प्रतियोग्यपि भेदस्वरूपं स्यात्तदा तन्निरूपकमेव न स्यादिति भावः(४) ॥

---

(१) अविद्यया विद्यमानो भावः सत्त्वं यस्य स तथोक्तस्तम् । अविद्याविद्यमानभावं भेदं यदि प्रत्यादिशाम:-इति सम्बन्धः ।

(२) अन्येन=भेदस्वरूपाऽप्रविष्टेनोपलक्षणीभूतेनेति यावत् ।

(३) भेदोपस्थितिपूर्वक एवाऽभेदग्रहः, अभेदस्य भेदाभावरूपत्वादित्यर्थः ।

(४) पूर्वपक्षिणोभाव इत्यर्थः ।

मू० "[a]निष्प्रतियोगिकस्य भेदस्य प्रमाणागोचरत्वा नित्यं प्रतियोगिघटिते एव तस्मिन् प्रमाणप्रसा [b]का चेयं वाचोयुक्तिर्यदन्याऽसाकाङ्क्षं पटस्य पमन्येन प्रतियोगिना निरूप्यमाणं ततो भेदो तीति ?। नहि यत्स्वरूपेणैव नीलं, तत् पीतेन प्यमाणं नीलं भवति । [c]यदपि चोक्तं प्रतियो घटेन निरूप्यमाणं पटस्य स्वरूपं भेद-इति, त पटं([1])प्रति प्रतियोगित्वं घटस्य किं स्वरूपं वा धर्मः कश्चित् ?। यदि प्रथमः, तदा पटं प्रतियोगित्वमित्येतावानेवार्थो([2])घटस्य स्वरूपं दात्मन्येव पटमपि प्रक्षिपतीति कथं नाद्वैतं पर्य्यवस्यति। [d]तत्रापि यदि प्रतियोगित्वमात्रं स्यात्मा 'पटं प्रती'ति च पटापेक्षित्वमन्यदेव, प्यनुपपन्नम् ।

टी० नियमतो यावति([3]) यन्निरूपणं पर्याप्तं तावत्स्व पान्तर्गतमेवेति प्रतियोग्यपि भेदस्वरूपं स्यादित्याह–। [a]"नि तियोगिकस्ये"ति ॥ ननु संयोगादिस्वरूपं प्रतियोगिनिरू यमपि न तद्घटितमूर्त्ति कमित्यनुशयेनाह([4])–। [b]"का चेयं ति । अन्याऽसाकाङ्क्षम्=अन्याऽनिरूपणमित्यर्थः । पटः † स्वरूपतः पटः, † प्रतियोगिना निरूप्यमाणो भेद, न दोषः, नीलमपि स्वरूपतो नीलं, पीतेन निरूप्यमाणं

(१) पटं प्रति=पटनिरूपितं, घटस्य=घटनिष्ठ, प्रतियोगित्वं योगिनो घटस्य स्वरूपं धर्म्मो वेत्यर्थः ।।

(२) पटनिरूपितत्वविशिष्टप्रतियोगित्वलक्षणः संपिण्डितोऽर्थ इ

(३) यावति=प्रतियोग्यादौ, यस्य=भेदादेर्निरूपणमिति, भेदादौ यस्य=प्रतियोग्यादेर्निरूपणमिति वा,ऽर्थः; उभयथाप्यग्रे दि"त्यनेन प्रतियोग्येव ग्राह्यम् ।

(४) इति पूर्वपक्षिण अनुशयं हृदि निधाय प्रकारान्तरेण न्त्याहेत्यर्थः ।

एव, भेदत्वेन निरूप्यमाणेपि तत्र पटात्वमित्यन्यदेतत्, प्रकारयोस्तु भेद एव, तथापि स्वरूपभेदे निरूपकभेद(१) एवानुपपन्न इति हृदयम् ॥ भेदस्वरूपे(२) प्रतियोगिनमन्तर्निवेश्य प्रतियोगिस्वरूपे भेदमन्तर्निवेशयति–। [c]"यदपी"ति । भेदवत् प्रतियोगित्वमप्यन्यसाकाङ्क्षमेवेति तदप्यन्यघटितमूर्ति स्यादित्यभेदे पर्य्यवसानमित्यर्थः ॥ प्रतियोगिनो(३) भेदस्य विशेषणतायां दोषमुक्तोपलक्षणतामाशङ्क्याह–। [d]"तत्रापी"ति ॥

सू० [a]"अकिञ्चिदपेक्षस्य प्रतियोगित्वस्य प्रमाणाऽविषयत्वात् । [b]'पटं प्रती'त्यत्रापि च स्वरूपतदन्यविकल्पे(४) दोष एव । [c]नापि द्वितीयः । [d]योसौ धर्मः पटं प्रति प्रतियोगित्वं तस्यात्मनि पटोपि प्रविशतीति तेन(५)सह पटस्याद्वैतं स्यात्, [e]यदा च पटो घटस्य धर्मतामापन्नस्तदा घटोपि पटस्य धर्मतामनेनैव

(१) "स्वरूपभेदनिरूपकभेद"–इत्यपि पाठः ।

(२) घटत्वावच्छिन्नप्रतियोगिताकभेदस्य पटरूपत्वाद् भेदः=पटः, तथा च पटस्वरूपे घटमन्तर्निवेश्य घटस्वरूपे पटमन्तर्निवेशयतीत्यर्थः ।

(३) पटनिरूपितत्वविशिष्टप्रतियोगित्वस्य प्रतियोगिरूपत्वात् प्रतियोगी = प्रतियोगित्वं, तन्निष्ठविशेष्यतानिरूपितपटरूपभेदनिष्ठविशेषणतायामित्यर्थः । यद्वा, प्रतियोगित्वं प्रकृते निरूपकत्वं, तथा च निरूपकस्य पटरूपस्य भेदस्य, विशेषणतायाम् = घटप्रतियोगित्वांशे विशेषणतायामित्यर्थः ।

(४) घटनिष्ठप्रतियोगितायां घटस्वरूपत्वे पटनिरूपितत्वं, घटेऽबाधितं, तथा सति पटनिरूपितत्वं घटस्य स्वरूपं ? धर्म्मो वा ?; आद्ये पटस्यापि घटस्वरूपत्वापत्तिः, द्वितीये तु पटस्यापि घटधर्मत्वप्रसङ्गाद्धर्मधर्मिणोश्चाऽभेदात्पुनरद्वैतमेवेति दोष एवेत्यर्थः ।

(५) तेन = प्रतियोगित्वेन, सह = सहितस्य, पटस्याऽद्वैतं स्यात् "घटेन सहे"ति शेषः ।

न्यायेन(१)गच्छेत् । [f]नहि पट(२)प्रतियोगित्वस्य
टेन प्रतियोगिना निरूप्यमाणत्वे घटस्याऽन्या
रस्तीति [g]परस्परमाश्रितत्वमाश्रयत्वं च स्यात्,
कस्यचित्प्रमाणस्य विषयो घटारूढः पटस्तत्
रूढश्च स एव घट इति । [h]किंच, धर्मस्य
धर्मिणा सममसंबन्धेऽतिप्रसङ्गः(३),संबन्धानन्त्ये
वस्था, प्रथमतोन्ततो गत्वा वा स्वभावसंबन्धा
गमे संबन्ध्यन्तरस्यापि तत्स्वभावप्रवेशादभेदे
पर्य्यवसानं स्यादिति ।

टी० ॥ [a]"अकिञ्चिदि"ति । प्रतियोगित्वनिरूपणं
मतो यावति परिसमाप्यते तावत्स्वरूपान्तर्गतमेवेत्यर्थः ॥
प्रति प्रतियोगित्वं घटस्ये'त्यनयोक्त्या घटाभेदं पटस्या
'पटं प्रती'ति तदेकदेशे(४)नापि तद्भेदसिद्धिरित्याह-।
प्रती"ति ॥ [c]"नापी"ति । प्रतियोगित्वं धर्मः कश्चिदिति
यपक्ष इत्यर्थः ॥ घटप्रतियोगित्वस्य(५) घटधर्मत्वे पट
घट।धर्मत्वं, प्रतियोगित्वस्य पट।घटितमूर्त्तिकत्वादित्या
[d]"योसावि"ति । यथा घटप्रतियोगित्वे पटो धर्मस्तद्वत्पटप्र
योगित्वेपि घटो धर्मो वाच्यः, युक्तस्तुल्यत्वादित्याह-।

(१) "अकिञ्चिदपेक्षस्य प्रतियोगित्वस्य प्रमाणाऽविषयत्वादि
दिनोक्तेनेत्यर्थः ।

(२) यथा घटनिष्ठप्रतियोगित्वस्य पटघटितमूर्तिकत्वेन पटस्य
धर्मत्वं तथा पटनिष्ठप्रतियोगित्वस्यापि घटघटितमूर्तिकत्वेन घटस्य
पटधर्मत्वं स्यादिति भावः ।

(३) अत्यन्तासम्बद्धयोर्हिमवद्विन्ध्ययोरपि धर्मधर्मिभाव
इत्यर्थः ।

(४) "पटं प्रति"-इत्यनेन वाक्यैकदेशेनापि घटपटाऽभेदसि
रित्याहेत्यर्थः । (५) पटनिरूपितघटनिष्ठप्रतियोगित्वस्येत्यर्थः

वे"ति ॥ कुत एवमत आह—। [f]"नही"ति ॥ ततः किमित्यत आह—। [g]"परस्परमाश्रितत्वमि"ति ॥ अस्तूभयोरपि धर्मधर्मिभावः, एतावतापि भेद एवेत्यत आह—। [h]"किंचे"ति । घटप्रतियोगित्वस्य([1]) घट[†]धर्मत्वे येन संबन्धेन तद्धर्मत्वं तस्यापि तदीयत्वे संबन्धान्तराङ्गीकारेऽनवस्था, स्वरूपसंबन्धस्यैव तत्राभ्युपगमे धर्मिस्वरूपसंबन्धो धर्मो, धर्मस्वरूपसंबन्धो धर्मीत्युभमेकमेव पर्य्यवस्येदित्यर्थः ॥

मू० [a]"एवमन्यस्मिन्नपि धर्मविकल्पे इति । [b]तस्मात्स्वरूपभेदे प्रमाणं भवत्प्रत्यक्षमद्वैते एव प्रमाणं भवति । * [c]ननु, घटादिकमेव यदाऽन्यानपेक्षं वीक्ष्यते तदा घटादिकमित्येव प्रतीयते यदा पुनः पटादिना निरूप्यते तदा ततो([2])भेद इति प्रतीयते*? । मैवम् । [d]घटादिकमित्येवंभूतप्रतीतेस्तावद्भेदप्रतीतिर्विलक्षणा, सा च न घटादिमात्रेण स्वविषयेणाऽन्यथाकारा भवितुमर्हति, * [e]नच पटादिकमधिकं तदा प्रकाशते इति विशेषः स्यात् *, घटपटविषयप्रतीतितोपि वैलक्षण्यात् । [f]नहि 'घटः पटश्चे'ति 'घटात् पटो भिन्न' इतिप्रतीत्योरेकार्थकत्वं कश्चित्प्रत्येति । तत्कस्य हेतोः ? पञ्चम्या प्रथमया च वैकल्पिकं निर्देशमसहमानयैव प्रतीतिकलहनिरासात् ।

टी० एवं घटत्वादिनापि धर्मेण सह घटाद्यभेदो वाच्य इत्याह—। [a]"एवमि"ति । धर्मविकल्पे=धर्मभेदे ॥ स्वरूपभेदग्राहप्रत्यक्षमभेदविषयं पर्यवस्यतीत्युपसंहरति—। [b]"तस्मादि"ति॥ तदन्याऽसाकाङ्क्षं तदन्यसाकाङ्क्षमपि भविष्यति निरूपकभेदा-

(१) पटनिरूपितघटनिष्ठप्रतियोगित्वस्येत्यर्थः ।
(२) ततः=पटादितः, भेदरूपेण प्रतीयते घट इत्यर्थः; "तत"—त्यस्य पटादिनिरूपणादिति वा ऽर्थः ।

दिति शङ्कते-। c"नन्वि"ति। एक एव घटोऽन्येन निरूप्यमा
भेद इति गृह्यते, अन्यथा तु घट एवेत्यर्थः ॥ भेदप्रतीति
प्रतीत्योर्वैलक्षण्यं विषयवैलक्षण्यपरतन्त्रमिति तदभावात् प्र
तिवैलक्षण्यमेव न स्यादिति परिहारमाह--। d"घटादिकमि"
ननु प्रतियोगिप्रवेशाऽप्रवेशकृतमेव प्रतीतिवैलक्षण्यमित्यत आ
e"नचे"ति ॥ 'घटाद्भिन्नः पट'‡ इतिप्रतीति'र्घटः पटश्चे'ति
तेर्विलक्षणा प्रतियोग्यनुप्रवेशमात्रेणानुपपन्नेति ततोपि वि
न्तरमनुसरणीयमित्याह-। f"नही"ति ॥

मू० a"नहि घटः पटश्चेति प्रत्येतव्ये कश्चिद् घटात्प
भिन्न इति प्रत्येति । तस्माद् घटस्य न स्वरूप
रूपणे पटप्रतीत्यपेक्षा । * b"नच यत्प्रतीतिर्यत्प्रती
कारणं स्यात् तत्र तस्याः कारणभूतायाः प्रतीते
र्थः तस्माद् "अयमि"ति कृत्वा कार्यभूतायाः प्र
तेरर्थः प्रतीयते*, c"सा भूम्निर्विकल्पकार्यादेवं(१)
विकल्पकार्यस्य प्रतीतिः, सा च सादृश्यादेरेवं(२)
र्यमाणादेः स्यात् । d"तस्मात् 'पटो घटाद्भिन्न'
त्याद्याकारेण घटा। देर्भेद एव भेदावधिभूतप
दिसंघटितः स्फुटं सर्वलोकसाक्षिकः प्रतीयम
नैकप्रतीते(३)रन्यप्रतीत्यपेक्षामात्रेण समर्थ
शक्योऽतिप्रसङ्गादिति । e"अत एवान्योन्याभावं

‡ एतच्चिन्हस्थले पटाद्घट इति वक्तव्येपि घटात्पट इति
टयोः प्रतियोग्यनुयोगिभाववैपरीत्येन वचनं प्रतीत्योर्वैलक्षण्यमा
मायकत्वादौत्सर्गिकं पूर्वापरग्रन्थसारूप्यार्थं तथैव कल्पनीयं वा।

(१) एवं = 'गोत्वाद्गौ'रित्यादिप्रकारेण ।

(२) एवं = 'सादृश्यात्स' इत्यादिप्रकारेण ।

(३) एकप्रतीतेः( = स्वरूपप्रतीतेः) अन्यस्य प्रतियोगिनो प्र
तिस्तदपेक्षामात्रेणेत्यर्थः । अतिप्रसङ्गात् = 'गोत्वाद्गौः' 'सादृश्या
रणमि'त्यादिप्रतीतिप्रसङ्गादित्यर्थः ।

मवगाहमानं प्रत्यक्षमद्वैतश्रुतिबाधकमित्यपि निरस्तम्। [f]अन्योन्याभावोपि यस्माद्भेद (१)एष्टव्यस्तस्मात्मन्येवान्तर्भावयेदुक्तयुक्तिभिः।

टी० नन्वेक एव विषयः प्रतीतिभ्यामालम्ब्यतां को दोषः? इत्यत आह—। [a]"नही"ति। भवेदेवं, यदि पञ्चमीप्रथमयोरर्थाऽभेदो भवेत्, न त्वेवं, ततश्च प्रयोगवैलक्षण्यात् प्रतीतिवैलक्षण्यं ततश्च विषयवैलक्षण्यमित्यर्थः॥ ननु घटस्वरूपभाने कदाचित्प्रतियोगिनः पटस्य ज्ञानं हेतुरिति ज्ञानगतहेतुत्वं पटे आरोप्य व्यपदिश्यते 'पटाद्घट'—इति, यथा 'धूमादग्निरि'ति; तथाच न पञ्चमीनिर्देशबलाद्विषयवैलक्षण्यमत आह—। [b]"नचे"ति॥ तर्हि 'गोत्वाद्गौः' इत्यपि प्रतीतिः, 'अवयवाद्गौः' इत्यपि च स्वाजनकज्ञानविषयेपि पञ्चमीनिर्देशस्य त्वयेष्यमाणत्वादित्याह—। [c]"मा भूदि"ति। "सादृश्यादे"रित्यादिपदात्पदलिङ्गादिग्रहः। "स्पर्शमाणादे"रित्यादिपदात्पदार्थलैङ्गिकादिसंग्रहः॥ तस्मात्स्वरूपभेदो नास्त्येव। यदि प्रतीतिबलादाऽऽस्थीयते तदाऽन्योन्याभावः स्यादपि, यदि तत्र बाधकं न भवेदित्युपसंहरन्नाह—। [d]"तस्मादि"ति॥ [e]"अत एवे"ति। प्रतियोग्यधिकरणयोरभेदपर्य्यवसानादित्यर्थः॥ एतदेवाह—। [f]"अन्योन्याभावोपी"ति। विश्वप्रतियोगिकान्योन्याभावस्य घटधर्मत्वे विश्वस्यापि घटधर्मत्वापत्तौ धर्मधर्मिणोरभेदपर्यवसानस्य(२) स्वरूपभेदप्रस्तावे युक्तेरुक्तत्वादित्यर्थः॥

मू० [a]किंच, घटपटयोस्तद्वदन्ययोश्च तादात्म्यमन्योन्याभावस्य प्रतियोगि मन्तव्यं, तद्यदि सर्वथा नेष्यते, तदा तद्विशिष्टस्तदुपलक्षितो वाऽन्योन्याभावोपि

(१) यस्माद्भेद एष्टव्यः=यत्प्रतियोगिको भेद एष्टव्यः, तं प्रतियोगिनमात्मन्येवान्तर्भावयेत् "निष्प्रतियोगिकस्य भेदस्य प्रमाणाऽगोचरत्वादि"त्याद्युक्तयुक्तिभिरित्यर्थः।

(२) अभेदपर्यवसानस्य युक्तेरुक्तत्वादित्यन्वयः।

न प्रमाणेन प्रत्येतुं शक्यः। नहि शशविषाणवि-
ष्टस्तदुपलक्षितो वा कश्चित्प्रामाणिको भवितुमर्ह-
तत्कस्य हेतोः?। तस्मिँस्तद्विशिष्टरूपेऽर्थे(१)ताद्रू-
चोपलक्षणाव्यवच्छिद्यमानात्मनि प्रमाणं निविश-
विशेषणमपि तदीयं तदुपलक्षणमपि वा नानुल्लि-
वितुं प्रभवति, तस्मिँ(२)श्चात्यन्तमसत्येवावलम्ब-
तत्प्रामाण्यं शक्यसमर्थनम्। * [b]नच वाच्यं प्र-
तियोगिको घटमाश्रितोऽभावभावोऽभ्युपगम्यम-
नात्यन्ताऽसत्प्रतियोगिकतादोषमावहतीति*। [c]
सति संसर्गभावादन्योन्याभावस्य को वि-
स्यात्?। [d]नहि यथा घटाभावः पटसंसर्गीति घ-
सर्गाभावं पटे समर्थयसे तथा घटाभावः पटा-
इति तत्तादात्म्याभावं पटस्य स्वीकरिष्यसि। त-
त्तादात्म्यं संसर्गं च प्रतियोगिकोटावन्तर्भाव्या-
न्याभावसंसर्गाभावयोर्वैलक्षण्यमभ्युपेयम्, तथा
चात्यन्तासत्प्रतियोगिता दुर्वारा।

टी० 'तादात्म्याभावः'—इतिव्यपदेशानुरोधेन ताद-
त्म्यैव प्रतियोगितामभ्युपगम्य दोषमाह—। [a]"किंचे"ति। 
टयोस्तादात्म्यमत्यन्तासदिति तत्प्रतियोगिकाभावप्रतीतौ वि-
षणत्वमुपलक्षणत्वं वा तस्यानुपपन्नमित्यन्योन्याभावप्रती-
न भवेद्, भवन्ती वा न प्रमा स्यादसद्विषयत्वादित्यर्थः॥

(१) तद्विशिष्टरूपेऽर्थे (=अत्यन्तासद्विशिष्टरूपेऽर्थे) तस्मिन्
निविशमानं तदीयं विशेषणं नाऽनुल्लिखद्भवितुं प्रभवति, ताद्रूपि
लक्षणव्यवच्छिद्यमानात्मनि (अत्यन्ताऽसतोपलक्षणेन व्यवच्छि
आत्मा=स्वरूपं, यस्य तस्मिन्) प्रमाणं निविशमानं तदुपलक्षणम-
ऽनुल्लिखद्भवितुं प्रभवतीति योजना।

(२) तस्मिन्=विशेषणीभूते उपलक्षणीभूते वा तादात्म्ये।

तादात्म्यं प्रतियोगि, किंतु पटादिरेव, तथाच नात्यन्तासद्विषयतान्योन्याभावप्रतीतेरत आह–। [b]"नच वाच्यमि"ति ॥ [c]"तथा सती"ति । एवं सति घटनिष्ठपटप्रतियोगिकाभावोऽत्यन्ताभाव एव स्यान्न तादात्म्याभाव इत्यर्थः ॥ ननु घटनिष्ठः पटप्रतियोगिकोऽभावः संसर्गाभाव एव, अयं तु न घटनिष्ठः, किंतु घटात्मक एवेति महान्भेदोत आह–। [d]"नही"ति । एवमभ्युपगमे तवापसिद्धान्त इति भावः । * ननु घटपटतादात्म्यमत्यन्तासदिति न घटतादात्म्यमपि, तथाच तदेव तादात्म्याभावप्रतियोगि स्यादिति नात्यन्ताऽसत्प्रतियोगिकता *?–इति चेन्न, घटतादात्म्यस्य पटे निषेधः संसर्गाभाव एवेत्यग्रे वक्ष्यमाणत्वात् (१) । *नचेह तादात्म्यं प्रतियोगितावच्छेदकमिति संसर्गाभावाद्भेदः*, घटमात्रतादात्म्यस्य प्रतियोगितावच्छेदकत्वे संसर्गाभावादविशेषात्; उभयतादात्म्यस्य तत्त्वेऽन्योन्याभावप्रतीतेरसद्विषयत्वापातात् ॥

सू० * "न च वाच्यं घटे पटत्वं नास्ति पटे च घटत्वं नास्तीत्येतावन्मात्रपर्यवसितैवान्योन्याभावस्य व्यवस्था भन्तव्येति *, यतस्तथा सति घटत्वे पटत्वे च न कश्चित्तादृशो धर्मोऽभ्युपगम्यते योऽन्योन्यस्मिन्निषेद्धुं योग्य इति तयोस्तादात्म्यापत्तौ सत्यां घटे पटत्वं, पटे घटत्वं च, निषेधात् प्रमाणं घटत्वपटत्वशून्यत्वं द्वयमप्यावेदयतीति वैधर्म्यस्य स्वरूपभेदस्य चासंभवेन किं प्रतियोगिनं, किं वालम्बनं(२), विधाय पटघटान्योन्याभावः प्रमाणपथमवतरेदिति। [b]अत एव न वैधर्म्यमपि भेदमावेदयत् प्रत्यक्षमद्वैतश्रु-

(१) "यदि तु तादात्म्यं नामाऽभेदाख्यो धर्मः कश्चिदिष्यते, स घटपटाद्यधिकरणतया निषिध्यते, तदा संसर्गाभाव एव स्यात्"–इति त्रिंशकारिकाव्याख्यानावसरे मूले वक्ष्यमाणत्वादित्यर्थः ।

(२) आलम्बनम्=अनुयोगिनम् ।

तिबाधकमुपपद्यते । वैधर्म्येपि हि घटत्वपटत्वा वैधर्म्यमन्यदस्तीत्यभ्युपगमे वैधर्म्ये वैधर्म्यविश्रान्त्यनवस्थयो[c]रेकम[d]ननुभवश्च कथं प्रत्युत्तरणीयः ।

टी० [a]"नच वाच्यमि"ति ॥ घटत्वपटत्वयोरन्योन्याभावोऽन्योन्याभावो यदि घटपटयोर्भेदः स्यात्तदा घटत्वपटत्वे परस्परं भिन्ने न स्यातां, तयो(१)स्तादृशधर्माभावात् तदुभयाऽभेदे च घटपटयोरपि भेदो दुर्लभः, प्रतियोगितावच्छेदकाधिकरणतावच्छेदकधर्मा(२)भावादित्यर्थः । किञ्चिद्वस्तु स्व एव विलक्षणमिति तु परिभाषामात्रमिति भावः । ननु, घटनिष्ठात्यन्ताभावप्रतियोगिधर्मवत्त्वं पटस्य, पटनिष्ठात्यन्ताभावप्रतियोगिधर्मवत्त्वं घटस्य, यद्वैधर्म्यं, तदेव भेदस्तमालम्ब्य प्रत्यक्षादि श्रुतिबाधकं स्यादित्यत आह—। [b]"अत एवे"ति तादृशो धर्मो घटत्वपटत्वादिकमेव वाच्यं, तत्र च तादृशधर्मान्तराभावादभेदसिद्धौ घटपटयोरप्यभेद एव पर्य्यवसन्न इत्यर्थः [c]"एकमि"ति । वैधर्म्यविश्रान्तिरेकं दूषणम् अनवस्था वेत्यनयोर्दूषणयोरेकमित्यर्थः ॥ [d]"अननुभवश्चे"ति । नहि घटे धर्मान्तरमनुभूयते इत्यर्थः । यद्यपि जातिव्यक्त्योरन्योन्यं धर्मधर्मिभाव(३)इति नानवस्था, न वाऽननुभवः, नाप्यन्योन्याश्रयः, परस्परमपेक्ष्याऽज्ञानादनुत्पादादनवस्थितेः; परस्परभेदजिज्ञासायां तु परस्परविशेषणत्वविज्ञानात्तज्ज्ञान(४)मिति, तथापि घटत्वपटत्वयोरेव वैधर्म्यं भेदकमिति तु दुर्वचमेवेति भावः ।

(१) तयोः=घटत्वपटत्वयो,स्तादृशधर्माभावात्=भेदकधर्माभावादित्यर्थः । तथाहि—घटत्वपटत्वयोः स्वतो व्यावृत्तत्वे घटपटादयः स्वतो व्यावृत्ता अङ्गीकरणीयाः किं मुधा तद्वृत्तिवैधर्म्यस्य व्यावर्तककल्पनया, अथ घटत्वपटत्वे स्वगतघटत्वत्वपटत्वत्वादिरूपवैधर्म्यभिन्ने, तर्हि ते अपि स्वगतवैधर्म्यान्तरभिन्ने, ते अप्येवमित्यनवस्थेति भावः । (२) धर्माऽभावात्, धर्मभेदाऽभावादित्यर्थः ।

(३) व्यक्तौ जातिः समवायेन, जातौ च व्यक्तिः स्वनिष्ठाधारतानिरूपिताऽऽधेयत्वसंबन्धेन, वर्तते इति परस्परं धर्मधर्मिभाव इत्यर्थः ।

(४) तज्ज्ञानम्=पारस्परिकभेदज्ञानम् ।

मू० [a]वैधर्म्ये च वैधर्म्याऽस्वीकारे वैधर्म्ययोरैक्यापत्त्या कथमा[b]ऽऽत्माश्रयभेदत्वेन तयोः पर्यवसानं स्यात् । किंच, [c]ये ते वैधर्म्ये भेदौ, ते किं घटादितो भिन्ने धर्मिणि निविशेते ? किमभिन्ने ? [d]परस्परविरुद्धयोरनयोः पृथग्भूतस्य(१)प्रकारस्यासंभवात् । आद्ये, येन भेदेन भिन्नत्वं वैधर्म्याश्रययोर्मन्तव्यं तत्रापि पर्यनुयोग(२) इत्यनवस्थायां पर्यवसानं स्यात् । * सन्त्वनन्ता एव भेदाः *?-इति चेन्न, [e]क्रमेण तेषामाश्रयसंबन्धे, सावधिसत्त्वे(३) वस्तुनि तदन्वयासङ्गतिरेव । [f]अथ जायमानं वस्तु युगपदेव ते भेदाः परिरभन्ते, तदा किंभेदविशेषिते किंभेदव्यवस्थितिरिति किं विनिगमकं ? विशेषाभावादन्योन्यकलहं तेषां कः समाधातुमीष्टे ? । [g]चरमचरमस्वीकार्येण च भेदेन प्रथमप्रथमस्वीकृतभेदोप [h]योगसिद्धेरग्रे धावन् पश्चाल्लुप्यमानो, विस्मरणशीलश्रुतवत्, स भेदप्रवाहः किमालम्बेत । [i]एवमेवंविधे विषयेऽन्यत्रापि–

---

(१) पृथग्भूतस्य प्रकारस्य=भेदाऽभेदादिरूपस्य प्रकारस्य, असम्भवात्=परस्परं विरुद्धत्वेन सहसम्भवाद्यसम्भवादित्यर्थः ।

(२) येन भेदेन भिन्नत्वं सोपि भिन्ने धर्मिणि निविशते ? किं वाऽभिन्ने ?-इति पर्यनुयोगः=प्रश्न इत्यर्थः ।

(३) अवधिः=कालमर्यादा, तेन सह वर्तमानं सत्वं यस्य वस्तुनस्तत्सावधिसत्वं वस्तु, तस्मिन्त्सावधिसत्वे वस्तुनि, कार्ये वस्तुनीति यावत्; तदन्वयाऽसङ्गतिः, तस्य=क्रमिकाऽनादिभेदप्रवाहस्य, योऽन्वयः=सम्बन्ध,स्तस्याऽसङ्गतिरेवेत्यर्थः; साद्यनाद्योराधाराऽऽधेयभावानभ्युपगमादिति भावः ।

[j]प्राग्लोपाविनिगमत्वप्रमाणाऽपगमै(१)र्भवेत्।
अनवस्थितिमास्थातुरचिकित्स्या त्रिदोषता ॥

टी० नन्वस्तु वैधर्म्ये विश्रान्तिः किमेतावतेत्यत आह— [a]"वैधर्म्ये चे"ति ॥ [b]"आत्माश्रयभेदत्वेने"ति । घटत्वपटत्वयो रैक्ये कथं स्वाश्रयादेव स्वाश्रयस्य भेदौ ते(२)स्यातामित्यर्थः [c]"ये ते"इति । ये(३)ते इति द्विवचनं विकल्पानुपयुक्तमपि स्वस्फोरणाय ॥ ननु भेदाभेदाभ्यां प्रकारान्तरमपि स्यादित्यत आह—। [d]"परस्परे"ति ॥ [e]"क्रमेणे"ति । अनन्तानां क्रामिकी वृत्तिस्तदा दिनद्वयस्यापिनि घटादौ न वर्तेरन्; कि कार्यमात्रे एव न वर्तेरन्नित्यर्थः ॥ ननु, जातः, संबद्धश्चेत् कालः, तथाच सर्वे भेदा युगपदेव वर्तन्तामित्याशङ्कते—। [f]"युगपदे"ति । यद्यपि युगपदेव वर्तमानानामप्यन्योन्यकलहः स्यात, नहि घटत्वपृथिवीत्वद्रव्यत्वसत्त्वादीनां युगपद्वृत्तौ कश्चित्, तथापि भेदो भिन्ने वर्ततेऽभिन्नेवेति विकल्पे किमपि नोत्तरमेतावतेति भावः ॥ [g]"चरमे"ति । यद्यपि युगपद्वृत्त्यभ्युपगमे "चरमचरमस्वीकार्य्येणे"त्यनुपपन्नं, तथापि 'भिन्ने वर्तते' इत्याश्रयणे प्रथमविशिष्टे द्वितीय(४)वृत्तिर्वाच्या, तत्र यौगपद्येऽपि प्रथमचरमभावसम्भव एवेति भावः ॥ [h]"उपयोगे"ति । भिन्नत्वप्रतीतिरेवोपयोगः । [i]"एवमि"ति । गवि गोत्वं वर्तते अगवि वा?—इति विकल्प्य गोत्वादिकमपि निरसनीयमित्यर्थः ॥ [j]"प्राग्लोपे"ति । अग्निमाग्निमभेदाङ्गीकारे तेनैवान्यथासिद्धौ पूर्व

(१) समुदायिनः समुदायिभिन्नत्वपक्षे तृतीयाविभक्त्यर्थः प्रयोज्यत्वं, तथाच प्राग्लोपादिप्रयोज्या त्रिदोषतेत्यर्थः, अभिन्नत्वपक्षे त्वभेदार्थस्तथा च प्राग्लोपाद्यभिन्ना त्रिदोषतेत्यर्थः ।

(२) एकस्यैव धर्मस्य स्वाश्रयात्स्वाश्रयभेदकत्वे घटत्वमपि घटस्य भेदकं स्यादिति भावः ।

(३) ननु मूले 'यो वैधर्म्यभेदः स किं भिन्ने निविशतेऽभिन्ने वा' इत्येव वक्तव्यं किं "ये ते वैधर्म्ये भेदौ" इतिद्विवचनोपादानेनेत्यत आह–ये ते इति ।

(४) द्वितीयवृत्तिर्वाच्या, अपरेषां सर्वेषां युगपद्वृत्तिर्वाच्येत्यर्थः

भेदविलोपः, किंभेदभिन्ने को भेदो वर्तते? इत्यविनिगमः, बहवो भेदा एकत्र घटे वर्तन्ते इत्यत्र प्रमाणापगमः, ते एते दोषा अनवस्थायां पतन्तीत्यर्थः । *ननु भेदविशिष्टे एव भेदो वर्तते इति पक्षाभ्युपगमे क्व प्रागलोपः, भेदप्रतीतेरेव तावद्भेदाभ्युपगममन्तरेणाऽनिर्वाहात् । अत एव नाऽविनिगम्यत्वमिति । अवश्यनिर्वाह्यभेदप्रतीत्युपपादककल्पनायां तत्प्रतीत्यैव(१)भेदानां क्रमयौगपद्ययोरन्यतरस्याऽऽक्षेपात् । "सर्वतो बलवती ह्यन्यथानुपपत्तिरि"ति त्वयोक्तत्वात् । अत एव न प्रमाणापगमो, भेदप्रतीत्यन्यथानुपपत्तेरेव प्रमाणत्वात् । अन्यथा घटकादाचित्कत्वानुरोधेन तत्रापि सामग्रीपरम्पराभ्युपगमो न स्यात् । नचाऽनवस्थापि, तद्भेदभिन्ने एव तद्भेदवृत्तेः । तद्वृत्तौ तद्भेदस्योपलक्षणत्वविशेषण(२)त्वाभ्यामुपपाद्यत्वात् । न वा भिन्ने भेदेन वर्तितव्यमिति नियमः । "कुत्र वर्त्तते?–इतिप्रश्ने, यत्र प्रतीयते इत्युत्तरं, कुत्र प्रतीयते?–इतिप्रश्ने, यत्र वर्तते", इति वार्त्तिककारदिशाप्युपपत्तेः । विप्रपञ्चितश्चायमुद्धारो भेदप्रकाशे*? । नैवम् । भेदप्रतीतेराविद्यकं भेदमादायोपपाद्यत्वात् । परमार्थे तु भेदे एते विकल्पा इति भावः । यत्तु,(३)"भेदप्रतीतिरनन्तभेदालम्बना,? एकभेदालम्बना वा?"–इत्यादिना प्राग्लोपाऽविनिगम्यत्वादीनामुपपादनं केनचित् कृतं तदनुपपन्नम्, "अनवस्थितिमास्थातु"रित्यभिधानादनवस्थापक्षे एव दोषत्रयस्याभिधानादिति ॥

मू० "यदि च क्वचिद् गत्वा स्वरूपमेवान्योन्यं व्यावर्तमानं भेद इष्यते तदा ययोः स्वरूपं [b]तयैष्टव्यं [c]तयोर्निःस्वरूपतापत्तिः; [d]अथ * न स्वरूपमात्रं मिथो

(१) अवश्यनिर्वाह्यभेदप्रतीत्यैवेत्यर्थः ।

(२) व्यावर्तकत्वमात्रं गुणमुपादाय विशेषणत्वमिहोपाधित्वं ग्राह्यं, तथाच न पूर्वं विशेषणपक्षोक्त आत्माश्रयाख्यो दोष इति भावः । यद्वा, विधिष्टवृत्तेर्धर्मस्य विशेषणवृत्तित्वानभ्युपगममतेनैतत् ।

(३) कारिकाया व्याख्यानान्तरं दूषयति–यत्त्वित्यादिना ।

व्यावर्तते किंनाम स्वरूपविशेषः *-इत्युच्यते, तर्हि स्वरूपविशेषमात्रव्यावृत्त्या स्वरूपमात्रं तयोः (१) स्यादित्येकत्वापत्तिः ।

टी० ननु स्वरूपभेदभिन्नयोरेव वैधर्म्यं भेदो यतस्तादृशानवस्थेत्यत आह—। [a]"यदि चे"ति ॥ [b]"तथैष्टव्यमि"ति व्यावर्तमानमेष्टव्यमित्यर्थः ॥ [c]"तयोरि"ति । ययोर्घटपटयोः स्वरूपं व्यावर्तमानं तयोर्निःस्वरूपत्वापत्तिरित्यर्थः ॥ ननु घटपटस्वरूपयोरन्योन्यव्यावृत्तावपि स्वरूपमात्रं न व्यावर्तते कुतो निःस्वरूपत्वापत्तिरित्याह—। [d]"अथे"ति ॥ घटपटयोः स्वरूपं न परस्परं व्यावृत्तं, किंतु स्वरूपविशेषः परस्परव्यावृत्त इति तयोरैक्यमेव पर्यवसन्नमित्याह—। [e]"तर्ही"ति । स्वरूपविशेषव्यावृत्त्यैव तयोर्भेद इति वाच्यम्*, स्वरूपाऽव्यावृत्तौ स्वरूपविशेषस्य(२)परस्परमव्यावृत्तेः, तद्व्यावृत्तौ वा स्वरूपव्यावृत्तेरावश्यकतया पुनः सैव निःस्वरूपतेति भावः ॥

सू० [a]"अथवा, वक्तव्योऽसौ स्वरूपमात्रादन्यो विशेषा[b]अथ "न स्वरूपं नाम किञ्चिदनुगतमिष्यते विशेषरूपासु [c]व्यक्तिष्वेव स्वरूपशब्दो नानार्थः विद्यते"-इत्यभिधत्से, [d]तर्हि गतमनेनैव न्या गोत्वादिसिद्धिप्रत्याशया, [e]नच प्रतिव्यक्ति स्व पदसमयग्रहोपपत्तिः ।[f]यदि(३)च स्वरूपं भेदः तदा धर्मिणि दृष्टे स्वरूपं दृष्टमिति क्वचिन्न सन्दे

(१) तयोः = घटपटयोः स्वरूपमात्रमव्यावृत्तं स्यादित्यर्थः ।

(२) स्वरूपविशेषस्येत्यतोऽग्रे"ऽपि"शब्दो द्रष्टव्यः । तद्व्यावृत्तौ स्वरूपविशेष व्यावृत्तौ ।

(३) यदि भेदः=घटपटादिलक्षणो विशेषः, स्वरूपं स्यात्तदा घटत्वपटत्वादिधर्मराहित्येन केवले धर्मिणि दृष्टे क्वचिदपि 'स्वरूपं दृष्टमि'ति सन्देहः=सम्भावनापि कस्यचित्पुरुषस्य न स्यात्, किन्तु धर्मिदर्शने एव 'स्वरूपं दृष्टमि'ति मतिस्स्यादित्यन्वयपूर्वकोऽर्थः ।

स्यादिति, [g]यदि चाऽभिन्ने भेदो निविशेत तदा याप्येका व्यक्तिः प्रतीयते घटादिः सापि तेनैव भेदेनाऽनेका स्यादित्येकाभावे नाऽनेकमपि व्यवतिष्ठते ।

टी० यद्वा(१)ऽनेनैवाशयेनाह—। [a]"अथवे"ति । घटस्वरूपं घट एव, पटस्वरूपम्पट एव, नच ताभ्यां स्वरूपान्तरमस्ति तयोर्यद्विशेषपदवाच्यं स्यादित्यर्थः ॥ स्वरूपविशेषव्यावृत्त्या स्वरूपमात्रं(२) तयोः स्यादित्याशङ्कते । [b]"अथे"ति ॥ शङ्कितां स्वरूपपदशक्तिमुपपादयति—। [c]"व्यक्तिव्वेवे"ति ॥ 'इदं स्वरूपमिदं स्वरूपमि'त्यनुगतप्रतीत्यनुरोधाद्यद्येकं स्वरूपं न स्वीकरणीयं तदा गोत्वाद्यप्येकमनुगतं न स्यादित्याह—। [d]"तर्ही"ति ॥ स्वरूपसामान्याभावे दोषान्तरमाह—। "नचे"ति । शक्तिग्रहस्याप्यनुगतधर्मपुरस्कारेणैव संभवादित्यर्थः ॥ यदि घटपटादिलक्षणो विशेष एव स्वरूपं स्यान्नत्वनुगतमन्यत् तदा दूराद् घटपटाविशेषाऽनवगाहिज्ञानं स्वरूपमात्रावगाह्यपि न स्यादित्याह—। [f]"यदि चे"ति । भेदः=विशेषः । संशयविपर्ययौ न स्यातामि"ति त्वपव्याख्यानम्(३) ॥ नन्वभिन्नयोरेव घटपटयोर्भेदो वर्तते इति द्वितीयः पक्षोऽस्त्वित्यत आह—। [g]"यदि चे"ति । यदि घटपटावभिन्नावेव भिन्नौ स्यातां तदा घटव्यक्तिरप्यभिन्ना भिन्ना स्यादित्येकं किमपि न भवेत्, तदभावाच्च तत्पर्युदासरूपमनेकमपि न स्यादित्यर्थः ॥

---

(१) तर्हीत्यादिपङ्क्त्या निरुक्तभावपक्षेऽथवेत्यादिग्रन्थस्याऽन्यार्थोऽभिधायितामनुसन्धायेदानीं निरुक्तभावार्थप्रतिपादकत्वमेवाथवेत्यादिग्रन्थस्येत्याह—यद्वे ति ।

(२) स्वरूपमात्रं=स्वरूपसामान्यं, तयोः स्यात् 'अव्यावृत्तम्'–इति शेषः ।

(३) अपव्याख्यानत्वञ्चास्य "नच प्रतिव्यक्ति स्वरूपपदसमयग्रहोपपत्तिः"-इत्यस्याऽव्यवहितमौलिकप्रतिज्ञातार्थस्योपपादनपरत्वाभावाद् द्रष्टव्यम् । एतच्चापाततः, वस्तुतस्त्वत्र प्रकृतशाङ्करव्याख्याने एव क्लिष्टकल्पनं दोषः, व्याख्यानान्तरं तु स्वातन्त्र्येण दूषणान्तरपरतया सुव्याख्यानमेवेति विभावयामः ।

मू० "एतेन न भेदावच्छिन्ने नचाऽभेदावच्छिन्ने भेदो वि विद्यते किंतूदासीने-इत्यपि निरस्तम्, [b]अत एव भेदो नाम स्वरूपान्योन्याभाववैधर्म्याऽनात्मको र्मान्तरं पृथक्त्वाऽपरनामकमित्यपि परास्तम्।[c]सो हि स्वाश्रये भिन्ने विनिविशेताऽभिन्ने वेत्यादिप क्तदोषलङ्घनाऽजङ्घाल(१)एव स्यात्, [d]स्वाश्रयेण स्वस्मिन्नभेदभयाद्यदि स एव भेदो निविशते तदात्माश्रयः, अन्यश्चेत्तस्मिन्नेवं तस्मिन्नप्यन्य इ नवस्था, क्वचिदपि गत्वा भेदभेदाश्रययोर्भेदस स्वीकारे च तदैक्यद्वारिका मूलपर्यन्तमेकता धा

टी० ननु भेदवृत्तावाश्रयावच्छेदकतया भेदाभेदौ न का किं तर्हि, कुत्र भेदो वर्तते ? इति प्रश्ने, धर्मिणि भेदो भेदाभेदौदासीन्येन वर्तते इति वा वक्तव्यमिति न पूर्व इत्यत आह-। [a]"'एतेने"ति । स्वस्मादपि भेदप्रसङ्गेनेत्या स्वस्याप्युदासीनत्वात् धर्मित्वाच्चेतिभावः ॥ ननु स्वरू स्यान्योन्याभावरूपभेदत्रयखण्डनेपि पृथक्त्वस्य सत्त्वान्नाद्वै त्यत आह-। [b]"अत एवे"ति ॥ अतिदेश्यमाह-। [c]"सोपी किंच, पृथक्त्वस्य गुणकर्मादावभावात्तद्भेदे द्रव्याणामप्यभेद किंच, पृथक्त्वस्यावधिनिरूप्यत्वाद्भेदस्य प्रतियोगिनिरूप्यत्वा दिति भावः ॥ अन्योन्याभावे वैधर्म्ये च दोषान्तरमाह-। [d]"स्वा श्रयेणे"ति । यद्यपि क्वचिद्गत्वा स्वरूपभेदे पर्यवसानमदुष्ट नचाऽन्योन्याभाववैधर्म्याभ्युपगमानर्थक्यम् *, अनुभवबलेन रभ्युपगमात्; मूलपर्यन्तमेकताधावनं स्वरूपभेदप्रतिबद्ध तथापि स्वरूपभेदस्यापि निरस्तत्वादिति भावः ॥

(१) अलङ्घालः = मन्दगामी, तथा च यथोक्तदोषलङ्घ ङ्घालो मन्दगामी यथोक्तदोषाऽनतिक्रमीत्यर्थः ।

(२) "स्वस्मिन्"-इति शेषः ।

(३) अत्र-"इतीतरनिरूप्यत्वसाम्यात्पृथक्त्वेपि भेदपक्षोक्त पित्तरेव"-इति शेषः कथञ्चित् प्रायः पुस्तकेषु लुप्तो द्रष्टव्यः ।

[a]तद(१)द्वैतश्रुतेस्तावद्बाधः प्रत्यक्षतः क्षतः ।
[b]नानुमानादि तं(२) कर्तुं तवापि क्षमते मते ॥ २० ॥
[c]अद्वैतागमनासीरे साधु सा धुन्वती परान् ।
सेवासेवार्जयत्यर्थापत्तिपत्तिपरम्परा ॥ २१ ॥

मू० * [d]नन्वद्वैतश्रुतयो वर्णपदविभक्तितदर्थादिभेदानुपजीव्यार्थं प्रतिपादयन्त्यः स्वोपजीव्याभि(३)र्भेदबुद्धिभिर्न कथं बाध्यन्ताम्, उपजीवकस्योपजीव्याद् दुर्बलत्वात् * ? । मैवम् । [e]न वयं भेदस्य सर्वथैवासत्त्वमभ्युपगच्छामः; किंनाम, पारमार्थिकं सत्त्वम् । अविद्याविद्यमानत्वं तु तदीयमिष्यते एव, तदेव च कार्य्यकारणभावोपयोगि ।

टी० प्रत्यक्षविषयाभावात् प्रत्यक्षबाधो न संभवतीत्युपसंहरति–[a]"तदद्वैते"ति ॥ [b]"नाऽनुमानादी"ति । अनुमानापेक्षयाऽऽगमस्य बलवत्त्वात् । अन्यथा नरशिरः कपालं शुचि, प्राण्यङ्गत्वादित्याद्यप्यवकाशमासादयेदिति भावः ॥ अर्थापत्तेः स्वपक्षानुकूलत्वमुक्तं स्मारयति–। [c]"अद्वैते"ति । अद्वैतागमस्य नासीरे = पुरतः, सा = अर्थापत्तिः, परान् = विरोधिनः प्रमाणाभासान्, धुन्वती = निराकुर्वन्ती, सेवामानुकूल्यमर्जयति=भजते, अत एवार्थापत्तेः पत्तित्वेन(४) निरूपणमुपपन्नमित्यर्थः ॥ श्रुतिजबुद्धेः श्रौतानि नानापदानि कारणमिति नानात्वं विना कार्यकारणभावानुपपत्तिः, तमन्तरेण(५)श्रौतबुद्धेरनुत्पत्तौ कुत्र बाध्यबाधकभावचिन्तेति शङ्कते–। [d]"नन्वि"ति ॥ नानात्वमात्रस्योपजीव्यत्वं, नतु पारमार्थिकनानात्वस्य, येनोपजीव्यविरोधः स्यादिति परिहरति–। [e]"न वयं भेदस्ये"ति ।

(१) तत् = तस्मात् । (२) तं = बाधम् ।
(३) उपजीव्यते कार्य्येणाश्रीयते यत्तदुपजीव्यं ( = कारणम् ) उपजीवति कारणाश्रितं भवति यत्तदुपजीवकं ( = कार्य्यम् ) इत्यर्थः ।
(४) पत्तित्वेन, पदातित्वेनेत्यर्थः ।
(५) तमन्तरेण=कार्य्यकारणभावाऽनुपपत्तिमन्तरेण ।

यद्यप्यद्वैतस्याविद्यकत्वमस्तु, श्रुतिविषयत्वेन तत्पारमार्थि प्रत्यक्षविषयतया भेदस्यैव पारमार्थिकत्वं किं न स्यात्, आ धितसकललोकव्यवहारे प्रतीयमानेप्याविद्यकत्वस्य परिभा मात्रत्वात्, व्यवहारविषयत्वेनैव पारमार्थिकत्वसाधनात्, व्य हाराऽविषयस्य ब्रह्माद्वैतस्यैवापारमार्थिकत्वसंभवात्; अद्वै नुरोधाच्छ्रुतेस्त्वयैवोपपादनीयत्वात्(१), अन्यथा त्वयैव द्वै पत्तेः; एवं तज्जनितबुद्धेरपि(२); यदि च स्वप्रकाशबलाद्वै तदा तत एव द्वैतं किं न स्यात् ?; न हि स्वप्रकाशस्य न विषय इति प्रतिपादयितुं शक्यसि, तथाऽप्यहं खण्डनिको व्यवस्थापक इति भावः ॥

सू० [a]एतेन "एकमेवे"त्येव(३)कारव्यवच्छेद्येना"द्वि तीयमि"ति द्वितीयेन, "न नाने"ति नानात्वे "किञ्चने"त्यनेन बहुना विना नोपपद्यमानेन, व्या घातः—इत्यपि प्रत्यादिष्टम्। [b]श्रुतिभिश्चाद्वैतार्थि पारमार्थिकमद्वैतं प्रतिपाद्यते, नच पारमार्थिक तिरपारमार्थिकधिया शक्यबाधा, [c]माभूत्(४)शुक्ति रजतधिया परमार्थशुक्तिमतिबाधः। [d]यत्र त्वनि रनुष्ण इतिबुद्धेरुष्णज्ञानोपजीवना(५)दुष्णबोधेना नुष्णबुद्धिबाधस्तत्र द्वयोरप्यविद्याविद्यमानत्वाद्वा

(१) "उपासनीयत्वात्"—इत्यपि पाठः।

(२) अत्रापि "त्वयैवोपपादनीयत्वात्"—इत्यनुषञ्जनीयम्।

(३) "एकमेव"—इत्येवकारव्यवच्छेद्येन (विजातीयभेदेनाद्वै व्याघातः, "अद्वितीयमि"ति (पदव्यवच्छेद्येन) द्वितीयेन व्याघातः नाना"—इति नानात्वेन व्याघातः, "किञ्चन"—इत्यनेन बहुना वि नोपपद्यमानेन व्याघात—इत्यपि प्रत्यादिष्टमित्यन्वयः॥

(४) अत्रेत्थमक्षरयोजना—शुक्तिरजतधिया परमार्थशुक्तिमति मा भूद् (इत्यतः) पारमार्थिकमतिरपारमार्थिकधिया शक्यबाधा (भवति)।

(५) अनुष्णज्ञानस्य प्रतियोगिविधयोष्णज्ञानमुपजीव्यम्।

युक्तः। *[e]ननु, तत्रापि तर्ह्यनुष्णतापि पारमार्थिक्येव साध्यतामबाधनाय*?। मैवम्।

टी० श्रौतपदवर्णनानात्वज्ञानस्योपजीव्यत्वमाशङ्क्य श्रौतपदानामर्थभेदप्रत्ययमन्तरेणाऽप्रतिपादकत्वात् तदुपजीव्यत्वमाशङ्क्याह—। [a]"एतेने"ति, आविद्यकभेदाभ्युपगमेनेत्यर्थः॥ पारमार्थिकविषयत्वेन श्रुतेरपारमार्थिकभेदविषयकप्रत्यक्षाद्यपेक्षया बलवत्त्वमाह—। [b]"श्रुतिभिश्चे"ति॥ अत्राऽनुरूपं दृष्टान्तमाह—। [c]"मा भूदि"ति॥ ननु यदि पारमार्थिकबुद्धिरपारमार्थिकधियं बाधते इति वस्तुगतिस्तदोष्णताग्राहिप्रत्यक्षमनुष्णताऽनुमानं तव मते न बाधेताऽपारमार्थिकधर्मविषयकत्वादित्यत आह—। [d]"यत्र त्वि"ति। वस्तुगतिरियं यत् पारमार्थिकविषययैव धियाऽपारमार्थिकधीर्बाध्यते, व्यवहारस्तु वस्तुगतिमननुरुध्यापि, इति व्यवहारदशायां प्रत्यक्षस्यैव बलवत्त्वाद्बाधकत्वमुच्यते इत्यर्थः॥ ननु परमार्थसदद्वैतगोचरा श्रुतिरित्यबाध्येति यथा त्वयोच्यते तथाऽनुष्णतानुमानवादिनापि तस्याः पारमार्थिकत्वमभ्युपगम्यैव तत्रापि प्रत्यक्षबाधोपि निरसनीय इत्याशङ्कते—। [e]"नन्वि"ति॥

मू० [a]"अनुष्णताया जलादिदृष्टान्तसजातीयायाः शीताद्यव्यावृत्तस्वरूपाया प्रसाधनेनाविद्याविद्यमानत्वे एव विश्रामात्; तत्रै(१)वंविधरूपतानङ्गीकारे चाद्वैतस्यैव नामान्तरकरणापत्तेः; ततस्तस्यां ज्ञेयज्ञानादिभेदावश्याभ्युपेयतया(२)जगद्बाधयुक्तिकवलाऽप्रवेशा-

(१) तत्र=अनुष्णतायाम्, एवंविधरूपताऽनङ्गीकारे=जलादिदृष्टान्तसाजात्यानङ्गीकारे।

(२) ज्ञेयज्ञानादिभेदस्याऽवश्यमभ्युपेयता ज्ञेयज्ञानादिभेदावश्याभ्युपेयता ("लुम्पेदवश्यमः कृत्ये तुम्काममनसोरपि" इति मलोपः) तयेत्यर्थः, जगद्बाधयुक्तयो द्वन्द्वप्रपञ्चसम्बन्धखण्डनयुक्तयस्ताभिर्यत्तादृश्या अनुष्णतायाः कवलनं=ग्रसनं (बाधनमिति यावत्) तस्य योऽप्रवेशस्तस्याऽसम्भवात्, जगद्बाधयुक्तिभिर्जगदन्तर्गताऽनुष्णताया अपि बाधनाद्ब्रह्मवदबाध इति भावः।

संभवात् । [b]अद्वैते च द्वैताश्रयस्य बाधस्य वास्तवस्य नवकाशादपारमार्थिकत्वसंभावनापि दूरत एवाप रतीति । * [c]ननु([1])किमद्वैतपरमार्थताभ्युपगमे समाहितं भवति, यत उपजीव्यबाधादद्वैते प्र श्रुतिर्जनयितुं न शक्नोतीति ब्रूमः * ?। मैवम् [d]अद्वै हि पारमार्थिकमिदं पारमार्थिकेन भेदेन बाध्ये ([2]), नत्वविद्याविद्यमानेन, तस्मादविद्याव्यवहि भेदं तद्बोधं चोपजीवन्त्या([3]) [e]न परमार्थाद्वैतबु रुपजीव्यबाधः । [f]यदि श्रुतिजन्या भवन्त्यप्यद्वै बुद्धिरविद्याविद्यमाना, तथापि तद्विषयस्तावत् मार्थसदेवाद्वैतं, विरोधेन([4]) च तस्या बाध्यता, च नास्तीति ।

टी० जलादौ याऽनुष्णता सैव यदि वह्नौ साध्यते तदितरप्रपञ्चबाध्यत्ववत्तद्बाध्यत्वमपि सुलभम्, अथ तद्वि क्षणमेवानुष्णत्वं साध्यते यत्र प्रपञ्चबाधकयुक्तयो न प्रभव तदा तदेवाऽद्वैतमिति सिद्धिं नः समीहितमिति परिहर [a]"अनुष्णतायां"इति ॥ ननु कथमद्वैतस्यापि न जगद्बाध युक्तिकवलनमत आह—। [b]"अद्वैते चे"ति । बाधकयुक्तयो भेदगर्भाः, भेदः खण्डित इति वास्तवो बाधो नास्त्येवेति

(१) "यद्यपि 'नच दूढान्वये'त्यादिनेदमाशङ्क्य निराकृतं तथाप्युपजीव्यत्वपुरस्कारेणेदानीं शङ्काऽवधेया"—इति प्रगल्भ श्रीदर्पणे ।

(२) "विरुद्धध्येत"—इत्यपि पाठः ।

(३) उपजीवन्त्याः परमार्थाद्वैतबुद्धे रुपजीव्यबाधो नेत्यन्व अत्राऽद्वैतबुद्धे रुपजीव्यस्य बाध इत्येकदेशान्वयो द्रष्टव्य, उपजी वाध इति वा ।

(४) विरोधेन=विषयापहारेण, तस्याः=अद्वैतधियो, बाध सच=विषयापहारश्च, प्रकृते नास्तीत्यर्थः ।

तस्य किञ्चिद्बाधकमित्यर्थः ॥ ननु परमार्थमतिरपरमार्थधिया न शक्यबाधेति तदा स्यात् यदि पदार्थनानात्वस्योपजीव्यस्याविरोधादुपजीविकया श्रुत्या ज्ञानं जन्येत, तदेव नास्तीत्याशङ्कते—। "“नन्वि”ति ॥ भेदो, भेदबुद्धिर्वा, नाद्वैतं प्रतिबद्धुमर्हति, अपारमार्थिकत्वादपरमार्थविषयत्वाच्चेति परिहरति—। [d]“तद्वैतमि”ति ॥ “न परमार्थाद्वैतबुद्धेरुपजीव्यबाध”इति । (१)प्रतिबन्ध इत्यर्थः ॥ ननु यद्यद्वैतबुद्धिः पारमार्थिकी, तदा तयैव द्वैतम्; अथाऽपारमार्थिकी, तदा बाध्यत्वान्नाद्वैतसिद्धिरित्याशङ्क्याह—। [f]“यदी”ति। इतरप्रपञ्चबुद्धेरपारमार्थिकत्वेपि विषयस्या(२)द्वैतस्य न बाध इति बुद्धेरपि न बाध्यत्वमित्यर्थः । बाधस्य विषयापहाररूपत्वाद्विषयस्य च प्रत्यक्षादिभिरप्यपहर्तुमशक्यत्वादिति भावः ॥

सू० तस्मात्—

पारमार्थिक(३)मद्वैतं [a]प्रविश्य शरणं श्रुतिः ।
बाधना[b]दुपजीव्येन बिभेति न मनागपि ॥ २३ ॥

श्रुतिरपि तदाह—“द्वितीयाद्वै भयं भवती”ति । [c]तच्चाद्वैतं “ब्रह्मैवेदं सर्वमि”ति श्रुत्यर्थेन सहैक्यमापन्नं ब्रह्मैव स्यात्, “विज्ञानमानन्दं ब्रह्मे”ति च श्रुत्या ज्ञानानन्दात्मतया व्यवतिष्ठते । [d]तेन यदिदमद्वैतज्ञानं श्रुत्या जनितं तद्विज्ञानाद्वैतात्मन्येव निविशते । * [e]ननु कथं तस्य श्रुत्या जन्यत्वमुपपद्यते ? * ।

(१) अन्वार्थसौकर्य्यार्थं “प्रतिबन्ध”इत्यतः प्राक् “उपजीव्यबाधः”—इति प्रतीकमनुषञ्जनीयम् ।

(२) विषयस्य=अद्वैतबुद्धिविषयस्य, बुद्धेः=अद्वैतबुद्धेः । अद्वैतबुद्धेश्च ब्रह्मरूपत्वेन द्वैतापत्तिशङ्कावारणं बोध्यम् ।

(३) श्रुतिः पारमार्थिकमद्वैतं शरणं प्रविश्य उपजीव्येन बाधनात् मनागपि (=ईषदपि ) न बिभेतीत्यन्वयः ।

[f]सत्यमेवं(१) स्यात्, यदि तस्य पारमार्थिकी श्रु
जन्यतापि स्यादविद्याव्यवस्थिता तु तज्जन्यता
पारमार्थिकेनाजन्यत्वेन विरुद्ध्यते; [g]अत एव श्रु
दमेकं साध्यते। यत्तु, तत्र यद्येकता भेदा भा
यदि चैकत्वसङ्ख्या, यदि वा ज्ञानात्मकत्वं,
वाऽन्य एवैकत्वनामा कश्चिदभेदापरपर्यायो ध
स्तद्रूत्वं बोध्यते, तच्चाद्वैतव्याघातकत्वान्न सेद्धु
ति, तदा तदपि निष्पीडन(२)मसहमानं तज्
श्रुतिजन्यत्वेन सहैव निवर्तताम्, यत्तु तादृशस्याद्वै
धर्मस्य धर्मितया प्रमितं तन्मात्रमबाधादधिगतं
मार्थतो व्यवतिष्ठताम्।

टी० [a]"प्रविश्ये"ति। विषयीकृत्येत्यर्थः॥[b]"उपजीव्येने"
पदपदार्थनानात्वेन तद्गोचरज्ञानेन चेत्यर्थः॥ ननु कयाचि
द्वैतं, कयाचिद्ब्रह्म, कयाचिद्विज्ञानं, कयाचिदानन्दः, श्रु
प्रतिपाद्यते इति श्रुतीनां विरोधे किमपि न सिद्ध्येत्; अ
रोधे वा सर्वं(३)सिद्ध्येदित्यद्वैतमनुपपन्नमेवेत्यत आह-"
ति। यद्यपि "एकमेवाऽद्वितीयं ब्रह्मे"ति प्रस्तुत तयैव श्रु
ब्रह्मात्मकत्वसिद्धिः, तथापि श्रुत्यन्तरोपष्टम्भस्तत्राप्युक्त(४)
श्रुतावद्वैतमात्रे तात्पर्यं, नतु ब्रह्मण्यपीति भावः॥ श्रु
सामञ्जस्यफलमाह-। [d]"तेने"ति॥ जन्यजनकभावस्याद्वैतपा
न्यित्वमाशङ्कते-। [e]"नन्वि"ति॥ अपारमार्थिको जन्यजनक

(१) अत्र यदिशब्दानुरोधात् तदेति शब्दोऽध्याहर्तव्यः।

(२) तदपि निष्पीडनं=तादृशमपि न्यायाघातम्, असहमानं त
नम् = एकत्वादिधर्मविज्ञानम्।

(३) सर्वम् = ब्रह्मविज्ञानानन्दैतत्त्रयमद्वैतव्यतिरिक्तम्।

(४) उक्तः, मूलकारेण "ब्रह्मैवेदं सर्वम्"-इत्युक्त इत्यर्थः।
हेतुः-तस्यामिति, यतस्तस्याम् = "एकमेवाऽद्वितीयमि"त्याका
तावद्वैतमात्रे तात्पर्यं, नतु ब्रह्मणि = ब्रह्मणः सर्वात्मकत्वे,-इत्यर्थः।

टी० ॥ [a]"ज्ञातमात्रमि"ति । अनप्रमासाधारणज्ञाने इत्यर्थः ॥ [b]"अत्यापत्तिरि"ति । भ्रमेपि प्रमाव्यवहारापत्ति-त्यर्थः ॥ [c]"वस्तुत" इति । प्रमितमेव प्रमालक्षणं प्रमाव्यवहारजनकं, नतु प्रमितत्वेन ज्ञातमपि, येन दुरवधारणं स्यादि-त्यर्थः ॥ [d]"ने"ति । 'प्रमालक्षणं न प्रमितमि'ति वादिनि-रूपतः प्रमितं तदि'ति वक्तुमशक्यत्वादित्यर्थः ॥ यदि च प्रमितत्वमादाय व्यवहारस्तदा प्रमात्वनिरूपणमफलमित्य [e]"प्रमात्वे"ति ॥ वैयर्थ्यमेवाह—। [f]"वस्तुत" इति ॥

---

[g]"एवमि"ति । क्रियोपहितमव्यर्यादस्य क्रियानिरूपणा-धाशक्यनिरूपणत्वादित्यर्थः ॥ [h]"करणार्थे"ति । करणपदा-दुक्तेरित्यर्थः ॥ सिद्धे कुठारादौ कर्तुश्चरितार्थत्वमाह—। [i]" पत" इति ॥ ननु तथापि करणव्यापारे चरितार्थत्वं, नतु इत्यत आह—। [j]"तादृशस्ये"ति । व्यापारवत इत्यर्थः ॥ [k]" व्यापारो ही"ति । उद्यमननिपातनादेश्छेद्यविषयत्वादित्य अन्वयव्यतिरेकाभ्यां चरितार्थत्वमेवाह—। [l]"कर्माभावे"ति

सू० [a]एवमधिकरणस्यापि करणव्यापारनिर्वाहकत्वे, सम्प्रदानापादानयोश्चासार्वत्रि(१)कत्वं, करणं तु सार्वत्रिकमेवेति- [b]कारकान्तरेऽचरितार्थः सार्वत्रिको करणम् ? *,- इति मैवम् । [d]अस्तु तावदवि-तरमणीयमिदं व्याख्यानम्, अन्तरशब्दो यदि विशेषमात्र(२)वचनस्तदा न व्यवच्छेदकः, नहि वि-मपास्य कारकमात्रं केनचिज्जन्यते यद्व्यवच्छि-नापि चान्तरशब्दोऽन्यवचनस्तथा सति(३)करणा

(१) असार्वत्रिकत्वम्—असार्वत्रिकहेतुत्वं, तथाचाव्यवहितो-त्पत्त्यसार्वत्रिकविशेषणेन तयोरपि व्युदासः, करणस्य सार्वत्रिक-हेतुत्वात् । (२) विशेषमात्रेति, 'अनयोरन्तरं महदि'त्यादौ तथा-भेदवचनत्वं बोध्यम् । तत्तत्कारकवाचक इत्यर्थः, मात्रचा द्वितीय-भेदवाचकत्वं व्यावर्त्यते । ( ३ ) करणान्यकर्त्रादौ कर्त्रादेरचरिता-र्थतातिव्याप्तिसत्त्वे सत्येवात्माश्रयमप्याह—तथा सतीति ।

न्यदिति विशेषानिर्देशे करणादिति([1])समभिव्याहाराल्लभ्येत; यथान्य आत्मा, शरीरमन्यदित्यादौ; तथा सति करणव्यतिरिक्तकारकाभिप्रायेण प्रयुक्तः स्यात्,

टी० ॥ [a]"एवमि"ति । कर्तृकर्मणोः स्थितिं सम्पादयद्देशकालरूपमधिकरणं कारकान्तरे चरितार्थं, स्थाल्यादिरूपमधिकरणं कर्ममात्रस्थितिद्वारेणेत्यर्थः ॥ एतावता यन्निर्व्यूढं तदाह-। [b]"कारकान्तरे"ति । सार्वत्रिकपदं सम्प्रदानापादानव्यावर्तकं, तयोर्दानक्रियाविभागादिविशेषहेतुत्वादसार्वत्रिकत्वम् ॥ अजनके गगनादा([2])वतिव्याप्तिनिरासायाह-। [c]"हेतुरि"ति ॥ कारकान्तरपदं करणपरमित्यात्माश्रयः, यथा च विषयतयो करणे कर्म चरितार्थं तथा कर्तृव्यापारविषयतया करणमपि कर्तरि चरितार्थमित्यसिद्धिरित्यभिप्रेत्याह-। [d]"अस्तु तावदि"ति । सार्वत्रिकत्वं च करणस्य न व्यक्त्यभिप्रायेण, न वा करणत्वेन, तदनिरुक्तेः, एवं हेतुत्वमपीति भावः । समभिव्याहारात्=लक्ष्योपस्थापककरणपदसमभिव्याहारादित्यर्थः । 'अन्य आत्मे'त्यत्रान्यत्वं समभिव्याहृतशरीरापेक्षया, अन्यच्छरीरमि'त्यत्र च यथात्मापेक्षयेत्यर्थः ॥

सू० [a]"तच्च न, करणस्यैवाद्यापि निरूप्यमाणत्वात्, [b]अतिव्याप्तेश्च । [c]नापि कर्तृकर्मणोः स्वरूपोपादानपरोयमन्तरशब्दः,ताभ्या([3])मेवातिव्याप्त्यापत्तेः। [d]नापि कर्तृकर्मणी अपेक्ष्यान्यदन्तरशब्दार्थः, [e]वैयर्थ्यापातात्;—कारकेऽचरितार्थ इत्येवोच्यताम् । नाप्यन-

(१) करणादिति, लभ्येत, लक्षणसमन्वयवेलायामित्यर्थः । (२) मगधभिश्रास्तु गगनपरिमाणादावतिव्याप्तिवारणं हेतुपदस्य प्रयोजनमाहुर्मन्ये तत्साधु, अणुमहत्परिमाणयोरहेतुत्वात् "पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम्"--इति वचनात्, गगनस्य तु शब्दादिकं प्रति हेतुत्वमेव । (३) ताभ्याम् = कर्तृकर्मभ्याम् । अयं भावः । नहि कर्ता कर्तरि चरितार्थः कर्म च कर्मणि, तया च कारकान्तरपदप्रतिपाद्ययोस्तयोरचरितार्थत्वात्कर्तृकर्मणोरेवातिप्रसङ्ग इति ।

धिकार्थ एवायमिति न प्रयोक्तव्योऽन्तरशब्दः; सति कारकजनकं हस्तादि करणं न स्यात्; रवद्धि कारणं कारकमुच्यते, अस्ति च संयोगादिव्यापारवतो वह्न्यादेस्तथात्वम्,(¹) च हस्तादेस्तज्जनकत्वम् । * न च हस्तादि वाभ्युपेयम् *, व्यापारवतः कारणत्वेन तत्कार स्यावश्याभ्युपेयत्वात्, कर्त्रादिषु दुरन्तर्भाव सप्तमकारकस्वीकारापत्तेः ।* नच(²)व्यवधाना हेतुत्वमेव तेषां, किंनाम हेतुहेतुत्वमिति *, रप्येवं प्रसङ्गात्,

टी० ॥ एवं सत्यात्ताश्रय इत्याह—। a"तच्च ने"ति ॥ न्यकारकाचरितार्थत्वं कर्तृकर्मणोरपीत्यतिव्याप्तिमाह— तिव्याप्ते रि"ति ॥ कर्तृकर्माचरितार्थत्वविवक्षायां ताभ्यां व्याप्तिमाह —। c"नापी"ति । * नचानेनोपाधिना कर्तृ रपि करणत्वमिति वाच्यम् *, एवं लक्षणप्रणयनानर्थक्या दिति वक्ष्यते इति भावः ॥ ननु कर्तृकर्मान्याचरितार्थ त्युक्तौ करणे चरितार्थाभ्यां ताभ्यां † नातिव्याप्तिरित्यत d"नापी"ति ॥ e"वैयर्थ्यापातादि"ति । कारकाचरितार्थ त्त्यैव ताभ्यां † मतिव्याप्तिनिरासादित्यर्थः ॥ हस्ते करण वस्थापयति—। f"व्यापारवदि"ति ॥

मू० a"पुंव्यापाराद्धि हस्पन्दादिस्ततः कुठारक्रिया तश्छिदेति परम्पराव्यवधानात् । * b"सर्वैव व्यापारपरम्परा न तस्य हेतुतां हन्ति?*, –इति c"तुल्यम् । तस्मात्कारणत्वेनाऽवश्याभ्युपगन्त

* एतच्छिन्द्इस्थले कारकं, प्रायः सर्वत्र करणकारकस्य आ

(१) तथात्वम्=करणत्वम् । तज्जनकत्वम्=वन्ह्यादिरूपकारक त्वम् । (२) काष्ठादिव्यापारव्यवधानात्कुलालपितृवदन्यथासिद्ध तेषां हस्तादीनामिति नच वाच्यमित्यर्थः । † ताभ्याम्=कर्तृकर्म

स्ताद्यव्यापकत्वादलक्षणमिदम् । [d]एतेनापि 'कारकान्तरशब्दः कर्तृकर्मव्यतिरिक्तवचनः'—इति पक्षो व्युदास्यः(१) । * [e]कर्तृव्यापारविषयः करणम् ?*—इत्यपि न, [f]शरीरचालनाय(२)प्रयतमानस्य शरीरचलनक्रिया, क्रियाविशिष्टं वा शरीरं, प्रयत्नलक्षणकर्तृव्यापारविषयीभवतीति तस्यां क्रियायां करणं स्यात्, न चैतच्छक्याङ्गीकारं, भविष्यतः स्वं प्रति च कारकत्वानुपपत्तेः ।

टी० ॥ कर्त्तरि व्यवधानमाह—। [a]"पुंव्यापारे"ति ॥ कर्तुः प्रथमं कारणत्वं गृहीतं, तत्स्वरूपादन्तरायान्तराले व्यापारकल्पनमिति न तेनान्यथासिद्धिरित्याह—।[b]"सर्वैवमि"ति ॥ [c]"तुल्यमि"ति । हस्तादेरपि प्रथमगृहीतं कारणत्वं व्यापारपरम्पराकल्पनमन्तरेणानुपपन्नमिति न तयाऽन्यथासिद्धिरित्यर्थः ॥ [d]"एतेने"ति । इस्तादावव्यापकत्वेनेत्यर्थः । कर्तृकर्मभ्यामन्यस्मिन् करण एव हस्तादेश्चरितार्थत्वादिति भावः ॥ [e]"कर्तृव्यापारे"ति ॥ कर्तृव्यापार=उद्यमननिपातनादिस्तद्विषयः करणमित्यर्थः ॥ कर्तृव्यापारविषयः फलमपीति तत्रातिव्याप्तिं प्रपञ्चयति—। [f]"शरीरे"ति । क्रियाविशिष्टमिति मतान्तरे(३)"भविष्यत"-इति, क्रियाविशिष्टस्य च शरीरस्याभत्त्वात् कारणत्वमेवानुपपन्नं, दूरे करणत्वं, नचाभेदे जन्यजनकभाव इत्यर्थः ॥

सू० [a]न च 'साक्षात्कर्त्तृव्यापारविषय'—इति विशेषोपादानेप्यस्य(४)परिहारः, साक्षाद् व्यापार्य्य(५)मनःप्र-

(१) 'व्युदस्य' इति त्वपपाठः । (२) 'शरीरचलनाये'ति पाठस्त्वसङ्गतः । (३) "शरीरचलनक्रिया इति मते च स्वंप्रतीति" इति शेषः । क्रियाविशिष्टं शरीरमितिमतेन 'भविष्यतः कारकत्वानुपपत्ते'रि'ति मूलोक्तं व्याख्याय शरीरचलनक्रियेतिमतेन 'स्वं प्रतिकारकत्वानुपपत्ते'रि'ति मूलोक्तं विवृणोति—नचाऽभेदे इति । (४) अस्य=अतिव्याप्तिदोषस्य । (५) साक्षात्कर्तृव्यापारविषयेत्यर्थः ।

भूतिक्रियायां प्रसङ्गतादवस्थ्यात्, [b]अव्यापक(१)... [c]अथ *तत्क्रियाहेतुस्तत्क्रियाकर्त्तृव्यापारस्य विष... त्क्रियायां करणम् *,– इति मन्यसे, मैवम्, [d]अ... रवादे अङ्कुरादीनामकरणकत्वप्रसङ्गात्; सुषु... नन्तरभाविन्याः प्रमायाः परिगणितकरणोपा... परिसंख्यातेषु प्रमाराशिषु बहिर्भावप्रसङ्गात्; ... नस्यापि कर्तृत्वे चातिप्रसङ्गात्(३)। सेश्वरवादे... श्वरव्यापारविषयः सर्वं कारणमिति नाऽकरणं... स्यात्(४)। [e]ओमित्यभिधाने(५)चाकारणमात्र... च्छेद्यमिति'कारणं करणमि'त्येवोच्यतां वृथा... षणपूरणप्रयासः ।

टी० [a]"नचे"ति । आत्मव्यापारस्य तु न साक्षा... विषयो मनोव्यापारव्यवहितत्वादिति भावः(६)। प्र... प्राणमनोवह्नाड्यादिपरम्॥ [b]"अव्यापकत्वादि" ति।पर... व्यापारर्यं कुठारादावव्यापकत्वादिति भावः॥ ननु ... रादिव्यापारस्य न तत्क्रियाहेतुत्वमिति कुतोऽतिव्या... शङ्कते–। [c]"अथे"ति॥ क्षित्यङ्कुरादिकार्य्यं प्रति यत्कार... कर्तृव्यापाराविषयत्वेनाकरणत्वप्रसङ्गः, यच्च सुषुप्त्य...

(१) मनःप्रभृतिक्रियान्यत्वे सति साक्षात्कर्तृव्यापारवि... णमित्युक्तौ नोक्तदोषोऽतो दोषान्तरमाह–अव्यापकत्वादिति।
(२) अव्याप्त्यन्तरमप्याह–सुषुप्तीति । परिगणितानि यानि ... न्द्रियाणि तान्येवोपाधयस्तेषां भेदेन परिसङ्ख्याताः पञ्चधा ... ये प्रमाराशयस्तेषु बहिर्भावः प्रसज्येत।क्लृप्तकारणजन्यत्वादत... करणमस्ति न च तस्य कर्तृव्यापारविषयत्वमित्यव्याप्तिरित्यर्थः।
(३) अस्मदाद्यचेतनशरीरस्यैव सुषुप्त्यव्यवहितोत्तरभावि... तु तस्यैवाङ्कुरादिकरणत्वमपि प्रसज्येतेत्यर्थः। तथाच तन्मते... कमकर्तृकं न स्यादिति भावः। (४) कारणम् अकरणं न ... न्वयः। (५) ओमित्यभिधाने=अस्त्वित्यभिधाने। (६)... भाव इत्यर्थः।

ज्ञानकरणं तदपि न करणं स्यात्, चैतन्योपहितस्य कर्त्तृत्वस्य तत्रासत्त्वात् कर्त्तृव्यापारविषयत्वाभावादिति परिहरति—। [d]"अनीश्वरे"ति ॥ ननू(१)पाधीनामसाङ्कर्य्यं नः सिद्धान्तो, नतूपधेयासाङ्कर्यमपि, तथा च कर्त्तृकर्मादेरपि करणत्वमनेनोपाधिनाऽभिमतमेवेत्याशङ्क्य परिहरति —। [e]"चोमि"ति ॥

मू० [a]"अथ मन्यसे, * न धर्म्यन्तरव्यवच्छेदाय विशेषणानि, किं त्वेकस्यापि धर्मिणो रूपभेदेन करणपदाभिधेयतोपदर्शनाय*,—इति, [b]एवं(२)तर्ह्येतद्रूपालिङ्गितस्यं करणत्वाल्लक्षणोक्तिप्रवृत्तेन त्वया लक्ष्यमात्रमुक्तं भवेत् । * [c]नच लक्ष्यपदप्रवृत्तिनिमित्तमेव लक्षणार्थः *, गन्धवत्त्वादेः पृथिव्याद्यलक्षणत्वापत्तेः । [d]अपि चैवं 'वस्तुमात्रं करणमि'त्यभिधायैव किं न करणपदप्रवृत्तिनिमित्तमुपादर्शि ?। * [e]स्यादेवं यदि सर्वत्र वस्तुनि करणव्यवहारः स्याद् ?*,—इति चेत्तर्हि त्वदुक्तलक्षणमपि भवेद् यदि सर्वत्र कारणे करणव्यवहारः स्यादित्यपि पश्य; नहि कर्त्तरि कर्मणि वा कस्यचित्करणव्यवहारः । * कर्तरि(३)तावदस्ति लोके

---

(१) उपाधीनां = धर्माणामसाङ्कर्य्यमुपधेयस्य = धर्मिणश्च साङ्कर्यमिति शङ्कते-नन्विति । (२) एवं तर्हि लक्षणोक्तिप्रवृत्तेन त्वया एतद्रूपालिङ्गितस्य ( = साक्षात्कर्तृव्यापारविषयत्वधर्मवतः ) करणत्वात्लक्ष्यमात्रमुक्तं भवेदित्यन्वयः । लक्ष्यमात्रम् = वाच्यस्वरूपमात्रम्, नतु तल्लक्षणमपीत्यर्थः । (३) लोकशास्त्रयोर्दृष्टोदाहरणानुसारेण कर्तरि करणव्यवहारमाशङ्कते-कर्तरीति, इह=मदुक्तेर्थे, प्रमाणं=प्रमाकरणम्, देवदत्तः (कर्ता) । "मन्त्रायुर्वेदप्रामाण्यवदि"त्यादि गौतमीयं द्वितीयाध्यायस्यप्रथमाह्निकस्य समषष्टितमं सूत्रम् । अस्यार्थः=यथा वेदैकदेशस्य पथ्याऽदृष्टार्थस्य पथ्याद्यभिधायिन आयुर्वेदस्य यथा वा विषभूताद्यनिष्प्रतिषेधार्थस्य मन्त्रवेदस्य प्रामाण्यं दृष्टं तथाऽदृष्टार्थस्यापि समग्रवेदराशेः प्रामाण्यमनुमातव्यं तत्कर्तुरासस्य यत्प्रामाण्यं—यथाभूतार्थचिख्यापयिषादि तस्योभयत्रापि समानत्वादिति । एवं देव-

'प्रमाणमिह देवदत्तः'-इति, शास्त्रेऽपि "मन्त्रायुर्वेद-प्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्"-इति चेन्न । किमयं(१)माणवकेऽग्निव्यवहार इव गौणो मुख्य एव वा ?-इति संशये यदि त्वत्परिकल्पितन्निमित्तान्मुख्यः स्यात् ततः कर्मण्यपि स्यात्-तत एव निमित्तादिति बाधदर्शनेन(२)पारिशेष्याद् गौणतयैव तद्व्यवस्थापनाया युक्तत्वात् ।

टी० ॥ ननु कारणमात्रस्य करणत्वेऽपि न कारणत्वं करणपदप्रवृत्तिनिमित्तमपि तूक्तं(३)लक्षणमेव तथेति शङ्कते-।"न-ति ॥ लक्षणगवेषणायां प्रवृत्तिनिमित्ताभिधानं न प्रस्तुतमिति परिहरति-।b"एवं तर्ही"ति ॥ प्रवृत्तिनिमित्तमपि लक्षणं तथा च नाप्रस्तुतत्वमित्यत आह-c"नचे"ति । यदि प्रवृत्तिनिमित्तमेव लक्षणं तदा गन्धवत्त्वं न पृथिवीलक्षणं स्यात्तस्योपाधितया गुरुत्वेन पृथिवीत्वजातेरेव तत्पदप्रवृत्तिनिमित्तत्वादित्यर्थः । अथ तदपि(४)लक्षणं, तदाऽतिव्याप्तिरुक्तैवेति भावः । किंच, यदि प्रवृत्तिनिमित्तमात्रमलक्षणभूतमपि वक्तव्यं प्रस्तुतत्वाद्येव तदस्त्वित्याह-। d"अपि चे"ति ॥ प्रवृत्तिनिमित्तमपि व्यवहाराऽऽयत्तं वक्तव्यं नतु यत्किञ्चिदिति भावः। e"स्यादेवमि"ति । "त्वदुक्तलक्षणमपी"त्यत्र"प्रवृत्तिनिमित्तमपी"ति शेषः॥ f"तत एवे"ति । कारणत्वादेवेत्यर्थः ।

---

दत्तामयोः प्रमाकर्त्रोरपि प्रामाण्यस्य (=प्रमाकरणत्वस्य) लोके श्रवणात्कर्तुरपि करणत्वं भवत्येवेति पूर्वपक्षाभिप्रायः । (१) ... र्तरि करणत्वव्यवहारः । (२) बाधदर्शनेन=कर्मणि करणत्वव्यवहारो नास्तीति बाधदर्शनेन, यद्वा कारणत्वनिमित्तात्कर्मण्यपि करणत्वव्यवहारः स्यादित्याकारकस्तर्क एव प्रकृते बाधो ग्राह्यस्तद्दर्शनेनेत्यर्थः । पारिशेष्याद् गौणतयैव, तद्व्यवस्थापनायाः=कर्तरि करणत्वव्यवहारस्य व्यवस्थापनाया, युक्तत्वादित्यर्थः । (३) "व्यापारवद्धि कारणं करणमि"त्युक्तलक्षणमेव, तथा=करणपदप्रवृत्तिनिमित्तम् । (४) तदपि=करणपदप्रवृत्तिनिमित्तमपि । (५) वक्तव्यं, प्रस्तुते वक्तव्यमित्यर्थः ।

नमात्मार्थं जानामीत्यादौ गौण एव कर्मव्यवहारः, परसमवेतक्रियाफलशालित्वलक्षणाभावादिति भावः ॥

सू० *अस्त्येव कर्मण्यपि [a]तेन रूपेण?*,-इति चेत्, न(१) ताव[b]दयं शक्योपदर्शनोदाहरणः शास्त्रलोकयोः; [c]क्व दृश्यते घटं पश्यतीत्यर्थे घटेन पश्यतीति ?। [d]यदि तु त्वच्चेतसि केवलं स्यात् तत्र च नादरं विधातुमुत्सहामहे। 'प्रमेयमात्रं करण'मिति वदतो वामबुद्धेर्मनसि परिवर्तमानं प्रमेयमात्रे एव करणव्यवहारास्तित्वमेव(२)मनुरोद्धव्यं स्यादिति। [e] * घटेन पश्यतीत्याद्यनभिधानवशान्न प्रयोगो, [f] नहि सर्वं लाक्षणिकं(३)प्रयुज्यते ?*,-इति चेन्न। माऽस्तु, [g]तदभावे कोन्योऽस्ति तेषु करणव्यवहारः ? इति वक्तव्यः स्यात्, नचासौ शक्यदर्शन इति।

टी० ॥ [a]"तेने"ति। कारणत्वेनेत्यर्थः ॥ [b]"अयमि"ति। कारणत्वमात्रनिबन्धनः करणव्यवहार इत्यर्थः ॥ [c]"क्वे"ति। साधकतमत्वविवक्षायां घटेन पश्यतीत्यपि भवत्येवेति वाङ्मात्रमिति भावः॥ एतदेवाह—[d]"यदि त्वि"ति। यदृच्छया व्यवहारोपपादकत्वं वामबुद्धित्वम् ॥ कर्माप्युक्तोपाधिना करणं भवति, तृतीया तु तत्र न भवति, तथाप्रयोगाभावादित्याह—। [e]"घटेने"ति ॥ [f]"नही"ति। यद्यपि करणपदप्रवृत्तिनिमित्तव-

---

(१) अनन्यथासिद्धव्यवहारात्तथात्वावगतिरयं तु व्यवहारो गौणतयाप्युपयुज्यतेऽतो न कर्मादौ करणव्यवहारं समर्थयितुमीष्टे-इत्याह-नेति। यत्र कर्मणि करणव्यवहारो दर्शयितुं शक्यते तादृशोदाहरणं लोकशास्त्रयोर्नास्तीत्यर्थः। (२) एवं (सति) प्रमेयमात्रे करणव्यवहारास्तित्वमनुरोद्धव्यं स्यादित्यन्वयः। (३) लाक्षणिकम्=लक्षणनिष्पाद्यम्, प्रवृत्तिनिमित्तसिद्धमिति यावत्। अयमाशयः, यथा शशीत्यस्य चन्द्रे प्रयोगस्तथा मृगीत्यस्य लक्षणसिद्धत्वेपि न प्रयोग इति।

त्तायां न लाक्षणिकत्वं(१)तथाऽपि तथाप्रयोगाविषये प्रयुज्य-
नत्वमेव लाक्षणिकत्वं विवक्षितम् ॥ [g]"तदभावे" इति ।
गाभावे कर्मणि करणव्यवहारो नान्यो वक्तुं शक्यते, प्रयो-
णव्यवहारस्तु त्वयैवानभिधानान्निरस्तस्तथा च प्रवृत्तिनि-
तत्रातिप्रसक्तमेवेत्यर्थः ॥

सू० * [a]"क्रियया अयोगव्यवच्छेदेन संबन्धि(२)करण-
इत्यपि न । [b]तथाहि,-अयोगव्यवच्छेदो यो-
पर्यवस्येदिति संबन्धेन संबन्धीत्युक्तं स्यादिति
नरुक्त्यम् । * [c]यदा संबन्धीत्यनेन कालविशे-
यतसंबन्धिताभिधीयते ततोऽन्यस्मिन्नपि काले
न्धिता अयोगव्यवच्छेदपदेन विवक्षिता ! *,
चेन्मैवम् । [d]संबन्धीत्यनेन न कालविशेषनियता-
न्धिताभिहिता येन कालान्तरेऽलब्धसंबन्धिता-
धानाय पदान्तरमुपादीयेत । [e]अथोच्यते * संब-
त्यस्य सामान्यतोभिधायिनः कालविशेषनियत-
न्धमादायापि पर्यवसाने सार्थकत्वं भवत्येवेति का-
न्तरे असंबन्धितया व्यवतिष्ठमानं कर्त्राद्यपि
प्रसज्येत, तद्व्यवच्छेदाय कालान्तरे संबन्धिता
न्तरेणाभिधीयते* इति, मैवम् । [f]तर्हि तेनापि
देव कालान्तरे यदि संबन्धिताभिधीयते तदापि
सार्थकता संबन्धिपदन्यायेन(३)सामान्याभि-

(१) यद्यपि प्रवृत्तिनिमित्तवद्वृत्त्यसाधारणधर्मे प्रवृत्तिनि-
(कारणत्वे) न लक्षणत्वं तथापि घटेन पश्यतीति प्रयोगाविषये
णत्वस्य प्रयुज्यमानत्वं (प्रवृत्तिनिमित्तत्वम्) एव लक्षणत्वमाभ्यां
निर्दिष्टमिति पङ्क्त्यर्थः । (२) सम्बन्धि करणमित्युक्ते द्रव्यसम्ब-
ऽतिप्रसङ्गस्तन्निराकरणाय-क्रिययेति, कर्त्रादावतिप्रसङ्गवारणाय-
व्यवच्छेदेनेति । (३) सम्बन्धिपदन्यायेन=प्रथमसम्बन्धिपदघ-

भवेदिति ततोपि कालान्तरेऽसंबन्धव्यवच्छेदाय विशेषणान्तरमपि निवेशनीयं स्यात् ।

टी० ॥ [a]"क्रियये"ति । प्रधानक्रिययाऽयोगव्यवच्छेदेन संबन्धि करणं, नहि कुठारादौ सव्यापारे सति न छिदा, कर्तृकर्मणोस्तु सव्यापारयोरपि सतोः कदाचिन्न क्रियेत्यर्थः ॥ [b]"तथाऽऽह्वी"ति । द्वौ निषेधौ प्रकृतमर्थं गमयत इति भावः ॥ निषेधद्वयसमभिव्याहारात् सार्वदिकसंबन्धो लभ्यते इति शङ्कते-। [c]"यद्वे"ति 'संबन्धी'ति सामान्याभिधानसामर्थ्यादेव विवक्षितार्थसिद्धिरिति परिहरति-। [d]"संबन्धी'ति ॥ सामान्यं किञ्चिद्विशेषमादायैव चरितार्थं, निषेधद्वयसमभिव्याहारस्तु नैवमिति शङ्कते-। "अथे"ति ॥ 'अयोगव्यवच्छेद'इति योगसामान्यनिषेधोपि यं कञ्चन विशेषमादायेति परिहरति-। [f]"तर्ही"ति ॥

मू० [a]अथ* यदाकदाचिदपि योऽयोगस्तस्य सर्वस्य व्यवच्छेदो विवक्षितः*-इति, तर्हि संबन्धिपदे एवैषा विवक्षास्तु, कृतमधिकमुपादाय तद्विवक्षया ।*[b]निषेधव्यवच्छेदेन सार्वत्रिकत्वलाभः(१)?*-इति चेन्न, [c]निषेधव्यवच्छेदस्य विध्यनतिरेकार्थत्वेनाविशेषात् ।*[d]तद्धर्मिकं(२)संबन्धस्यासंबन्धासामानाधिकरण्यम'ऽयोगव्यवच्छेदेने'त्यनेनोच्यते?*-इति चेन्न, [e]तस्यापि संबन्धकाले तत्रासत्त्वोपगमात् ।*[f]सर्वदा?*-

अयमाशयः,-यथा माथमिकेन सम्बन्धीतिपदेन कालविशेषसम्बन्धिताभिधाने कालविशेषे सम्बन्धितया कालविशेषे चाऽसम्बन्धितया व्यवतिष्ठमाने कर्त्रादावतिप्रसङ्गवारणाय सातत्येन सम्बन्धाभिधायकमयोगव्यवच्छेदपदं प्रयुक्तं, तथा यदि तेनापि (=अयोगव्यवच्छेदपदेनापि) कालविशेषनियमेव सम्बन्धितोक्ता स्यात्तदापि तस्य सार्थकत्वं भवत्येवेति पुनरपि कालविशेषे सम्बन्धितया तद्व्यतिरिक्तकालविशेषे चासम्बन्धितया व्यवतिष्ठमाने कर्त्रादावतिप्रसङ्गः स्यादिति तद्वारणाय पुनः सततसम्बन्धाभिधायकमयोगव्यवच्छेदेनेति पदान्तरमुपादेयमेवं पुनःपुनरपीत्यनवस्था स्यादिति । (१) सम्बन्धे—इति शेषः । (२) तद्धर्मिकम्=कुठारादिधर्मिकम् ।

इति चेन्न, [g]यद्येवं तत्किं करणासत्त्वकालेपि एव करणेन क्रियायाः? । *यावत्सत्त्वम् *(१)-त्तर्हि संबन्धीति [h]व्यर्थं, यावत्सत्त्वमयोगव्यव- यद्विशिष्टमुपलक्षितं वा तत्करणमित्येवास्तु, न्धीत्येव वा तथा विवक्ष्यतामित्युक्तमेव। [i]अथ कयापि कुसृष्ट्या(२)संबन्धिपदसार्थकताम् यदि विवक्षितस्तदाप्युच्यते ।

टी० ॥ 'अयोगे'ति सर्वायोगविवक्षा, अत्र तन्नि- सर्वयोगलाभ इति शङ्कते-। [a]"अथे"ति ॥ शङ्किता स्या- सिदानीं विशदयति-। [b]"निषेधे"ति ॥ खण्डनिकोपि प्रायमाविष्करोति-। [c]"निषेधे"ति ॥ यत्र धर्मिणि प्रधान संबन्धस्य तदसंबन्धसामानाधिकरण्यं नास्ति तत् करणं तु नैवमिति शङ्कते-। [d]"तद्धर्मिकमि"ति ॥ कर्मादेरपि प्र- यासंबन्धसत्त्वकाले तदसंबन्धसामानाधिकरण्यासत्त्वा- दिति परिहरति-। [e]"तस्यापी"ति ॥ कर्त्रादौ क्रियासत्त्व- त्रेऽयोगसामानाधिकरण्यासत्त्वं, करणे तु सर्वदेति शङ्क- र्वदे"ति ॥ करणेप्यसम्भवः सार्वदिकक्रियायोगस्येत्याह- द्येवमि"ति ॥ [h]"व्यर्थमि"ति । तर्हि क्रियया अयोगव्य- मित्येव लक्षणमित्यर्थः ॥ [i]"संबन्धीत्येववे"ति । मत्वर्थीयविवक्षास्त्वित्यर्थः ॥ [j]"अथमि"ति । निषेधद्व- व्याहारबलाऽलभ्येप्यर्थे समभिव्याहारलभ्यत्वा- कुसृष्ट्ये दूशार्थलाभेपि दोषान्तरदुष्टमिदं लक्षणमित्यर्थः।

सू० [a]कृत्तिकोदयक्रियायां रोहिण्यासत्तिरप्येवं स्यात्, अनन्तरभाविनश्चतुर्दशस्य नक्षत्रस्योद- पूर्वभाविचतुर्दशसङ्ख्यनक्षत्रास्तमयस्य(१) च त्वं स्यात् । * नचैवमेव युक्तम् *, [b]यौगपद्या-

(१) यावत्कुठारादेः करणस्य सत्त्वं तावत्तेन छिदादिक्रियायोग-
(२) कुसृष्ट्या = कुतर्केण । (१) अस्तमयस्य अस्तंगमन-

णत्वानुपपत्त्या कारकत्वस्य दूरनिरस्तत्वेन करणत्वस्य सम्भावनाऽनारोहात्। * न च तत्र संबन्ध एव नास्ति *, [c]व्याप्तेः स्वभावसंबन्धात्मिकाया दुरपन्हवत्वात्। *[d]अथ कार्यकारणभावः संबन्धो विवक्षितः *, न, सामग्र्याः करणत्वापत्तेः(१)। * ओम् ?*–इति चेत्, तत् [e]किमोमित्यभिधायैव निर्वृत्तो भवान्? आकलितं किलास्माभिः सामग्र्यपि करणमित्यत्र न श्रद्दधतः(२)प्रणवपूर्विकां श्रुतिमेव काञ्चित्पठित्वा श्रद्धापयिष्यति भवानस्मानिति। * [f]न सामग्री कारणं, किंतु तदेकदेशो नानाभूतः(३)प्रत्येकं तथा, सामग्री तु यदनन्तरं कार्य्यं भवत्येवेत्येतावन्मात्ररूपा ?*–इति चेन्न, [g]एतादृशस्य सामग्रीलक्षणस्य करणेपि सत्त्वात् करणस्यापि सामग्रीत्वापातात्।

टी० ॥ तदेवाह–। [a]"कृत्तिके"ति। ज्योतिःशास्त्रादेतदवसेयम् ॥ कारणत्वव्याप्यं कारकत्वं, तद्व्याप्यं च करणत्वं, तथाच प्रकृते व्यापकनिवृत्त्या व्याप्यनिवृत्तिरावश्यकीत्याह–। "यौगपद्येने"ति ॥ [c]"व्याप्तेरि"ति। कृत्तिकोदयरोहिण्यासत्त्योरविचतुर्दशनक्षत्रोदयातीतचतुर्दशनक्षत्रास्तमययोश्च व्याप्तिलक्षणसंबन्धसत्त्वादित्यर्थः ॥ [d]"अथे"ति। सामान्यशब्दस्य विशेषपरतयेत्यर्थः। अभ्युपगममात्रेण नार्थतथात्वमित्याह–। [e]"किमो"ति ॥ विवक्षितलक्षणं(४) सामग्र्यां नागतमिति नातिव्याप्तिरित्याह–। [f]"न सामग्री"ति ॥ सामग्रीलक्षणं तदेकदेशे करणे व्यभिचारयति–। [g]"एतादृशे"ति ॥

(१) यद्यपि सामग्रीक्षणे क्रियायोगो नास्ति तथापि स्थूलकालमादायेदमिति बोध्यम्। (२) न श्रद्दधतोऽस्मान् (तमर्थं) भवाञ्छ्रद्धापयिष्यतीत्यन्वयः, किलशब्दो निरुक्तार्थस्याऽप्रामाणिकत्वेन हासप्रकटनार्थः। (३) नानाभूतः=कुठारदण्डादिरूपः। तथा=करणम्। (४) कार्य्यकारणभावसम्बन्धघटितं विवक्षितलक्षणं सामग्र्यां

सू० [a]क्रियाया विभागादौ विभागस्य च संयोगनाशं प्रति तथात्वापत्तेः। यच्च(१)[b] प्रति सामग्र्येकदेशे यत्प्रागभावादिकारणलक्षणमिष्यते तत्सामग्र्याति कथं तदकारणता? ।*[c]प्राक्कालमन्तर्भाव्य सा तादृश्याश्च (२) तस्याः प्राक् सत्त्वमेव नास्ति इति चेन्न, [d]अत एव प्राक्कालस्याकारणत्वात् णसामग्र्यां तदनिवेशात्(३) । [e]अपिचैवं विशे मपि करणं न स्यात् । नहि यावत्सत्त्वं व्यापारे पि तस्य क्रियाजनकत्वं, [f]क्रियाऽकाले(४) तदनुवृत्तिनिषेधे प्रमाणस्य दुरुपन्यासतया नापि लक्षणाऽसिद्धेः; प्रत्युत चिरस्थिरकारं स्पृश्ये स्पर्शप्रमाकरणस्पर्शनेन्द्रियसंयोग [h]मन्तुमुचितत्वात् ।

टी० ॥ अतिव्याप्त्यन्तरमाह—। [a]"क्रिये"ति ।

नागतं सामग्र्या अकारणत्वादित्यर्थः । (१) पूर्वं सामग्र्या त्वमभ्युपगम्य दूषणमुक्तमिदानीं सामग्र्या अपि कारणत्वमभ्यु तथा च करणलक्षणं सामग्र्यामतिव्याप्तमित्याह—यच्चेति । दृश्याः=प्राक्कालघटितायाः,तस्याः=सामग्र्याः, प्राक्काले सत्त्वं आत्माश्रयादिति भावः । न च विशिष्टकाले शुद्धस्य शुद्ध विशिष्टस्य वृत्तौ न दोषस्तत्राप्यंशत आत्माश्रयादिति हृदयम् (३) कालस्य कारणसामग्र्यामनिवेशे च कालाघटितकार करणलक्षणातिव्याप्तिरेवेति भावः । (४) क्रियाऽकाले=उ दात्मकक्रियातः पूर्वं, क्षणमपि तदनुवृत्तिनिषेधे=उद्यमननिपात शिष्टकुठारादेर्व्यापारिणः सामान्यसत्तानिषेधे—इत्यर्थः । तत्क्रियाऽकाले क्षणमप्युद्यमननिपातनादिविशिष्टकुठारादौ तत् निषेधे छिदाऽसम्बन्धनिषेधे इत्यर्थः ।

(५) चिरं स्थिरः करसंयोगो यत्र स्पृश्यद्रव्ये तत्रैव चेन्द्रियसंयोगस्थैर्यमस्ति, नास्ति चान्यत्र व्यासङ्गकाले स्पृश्य रणे त्वगिन्द्रियेऽव्याप्तिरिति भावः । एवं चक्षुरादावव्याप्ति

प्रति कर्मणः सामग्रीत्वापत्तिः, एवं चरमकारणे सर्वत्रेत्यर्थः ॥ [b]"प्रती"ति । सामग्र्येकदेशं प्रतीति योजना ॥ [c]"प्रागि"ति । प्राक्कालस्यापि कारणतया तद्घटितमेलनस्य ( सामग्र्याः ) प्राक्काले वृत्तिर्नास्तीति न सामग्री कारणमित्यर्थः ॥ [d]"अत एवे"ति । प्राक्कालावृत्तित्वादेवेत्यर्थः ॥ क्रिययाऽयोगव्यवच्छेदतया यावत्सत्त्वं संबन्धित्वं कुठारादावपि नास्तीत्यसम्भवमाह—। [e]"अपि चे"ति । उद्यमननिपातनादिविशिष्टकुठारादौ प्रथमक्षणे(२)पि छिदाऽसंबन्धो नास्तीत्यत्र प्रमाणाभावात्सन्देह इत्यर्थः ॥ [f]"क्रियाकाले" इति । नञोत्र प्रश्लेषः(३) ॥ [g]"प्रत्युते"ति, व्याप्तिस्थले द्रष्टव्यम् ॥ [h]"मन्तुमुचितत्वादि"ति । मनोणत्वकल्पनानुरोधेनेत्यर्थः ॥

मू० [a]"यावत्सत्त्वं च करणमिति भाषायां सर्वस्मिन् तत्सत्त्वकाले कारणत्वमित्यर्थः, न च कारणत्वस्य नियतपूर्वकालसंबन्धात्मकस्य क्वचित्काले सत्त्वं, कालं प्रति कालान्तराभावादिति । अथ * 'क्रियया योगव्यवच्छेदेन संबन्धी'त्यस्यायमर्थो(१)-यस्मिन्सति भवत्येव क्रियेति * । कोऽस्यार्थः ? किं यस्मादनन्तरं क्रियोत्पद्यते एव ?-१ उत यस्मिन्वर्त्तमाने क्रियोत्पद्यते एव ?-२ उत यस्मादनन्तरं क्रिया तिष्ठत्येव ?-३ उत यस्मिन्वर्त्तमाने क्रिया तिष्ठत्येव ?-४ । नाद्यः, सामग्र्याः(४)करणत्वप्रसङ्गात्, [b]हस्तादीनामकरणत्वप्रसङ्गात्, [c]सुखदुःखादेः प्रमेयस्यापि प्रमा-

(१) प्रथमक्षणे=फलीभूतक्रियापूर्वक्षणे, फलोपहितकुठारादिक्रियाऽऽद्यक्षणे वा । (२) वस्तुतस्तु नञोऽप्रश्लेषेऽपि 'क्रियाकाले = फलानुपहितकुठारादिक्रियाक्षणेतदनुवृत्तिनिषेधे=छिदाऽसम्बन्धनिषेधे'-इत्यर्थकरणे न दोषः । (३) यद्यपि वाच्योऽयमर्थो :न, तथापि तात्पर्य्यगत्याऽयमर्थ इति भावः । स्वाव्यवहितोत्तरक्षणे जायमानक्रियाकारणमिति प्रथमविकल्पार्थः, अन्यत्तु स्पष्ट एव । (४) सामग्र्याः=क्रियासामग्र्याः ।

करणत्वप्रसङ्गाच्च । * नच प्रमेयमपि प्रमायाः स्यादेवेति वाच्यम् *, तत्र तथाव्यवहारस्य (१) चिदप्यसिद्धेः । नापि द्वितीयः, स्पृश्येन सह संयोगस्य स्पर्शनेन्द्रियस्याव्यापनात्, तत्व्यासक्तौ तेन प्रमाऽनुत्पादात् । नापि तृतीयः, ग्र्यादेः करणत्वप्रसङ्गात्, उत्पत्तेः [d]स्थिरे कार्य प्रसङ्गाच्च । नापि चतुर्थः, [e]सहस्थायिनां कार्य प्रसङ्गात् । *अथ 'क्रिययाऽयोगव्यवच्छेदेन सर्वा करणत्वमि'त्यस्यायमर्थः–व्यापारवतः फला चारित्वमिति * । मैवम्, [f]हस्ताद्यव्यापनात् ।

टी० ॥ प्रकारान्तरेणासम्भवमाह–। [a]"यावदि"ति वत्सत्त्वं क्रियाऽयोगव्यवच्छेदेन यत्कारणं तत्सम्बन्धि णमि'ति वाक्यस्य सर्वत्र स्वसत्ताकाले यत्कारणं तत्र तत्स त्यर्थः पर्य्यवस्यति, काले च कालघटितं कारणत्वमसम्भवि [b]"हस्तादीनामि"ति । हस्ते सव्यापारे सत्यपि क्वचित् त्पत्तेरयोगव्यवच्छेदाभावादित्यर्थः ॥ [c]"सुखे"ति । सुख रवश्यसंवेद्यतया तदनन्तरं प्रमोत्पत्तेरावश्यकत्वादि आदिपदात् ज्ञानव्यक्तिविशेषग्रहः(२) । 'सामग्र्यादेरि'ति दात् कर्मशब्दादिपरिग्रहः(३) ॥ [d]"स्थिरे" इति । स्थैर्य त्पत्तेरनन्तरमपि घटसत्त्वात्तदु(४)त्पत्तावतिव्याप्तिरि [e]"सहस्थायिनामि"ति । व्यापारविशिष्टकुठारादिरूपा

(१) तथाव्यवहारस्य=प्रमाकरणत्वव्यवहारस्य । (२) सायविषयीभूतव्यवसायात्मकज्ञान-व्यक्तिविशेषस्य परिग्रह इत्य

(३) चक्राद्येकैकक्रियानन्तरमुत्तरोत्तरं क्रिया तिष्ठत्ये धारावाहिशब्दस्थलेपि पूर्वपूर्वशब्दानन्तरमुत्तरोत्तरं शब्द तत्र प्राथमिककर्मशब्दयोः करणत्वं स्यादित्यर्थः, न तु तथा दीनामेव करणत्वात् । (४) पूर्वं क्रियाऽयोगव्यवच्छेदेन करणलक्षणे क्रियापदस्य कार्य्यवाचकतया घटस्यापि क्रिया च्यम्, तथाच घटोत्पत्त्यनन्तरं घटरूपा क्रिया तिष्ठत्येवेति घ व्याप्तिप्रसङ्गः । यद्वा, घटसत्त्वाद्घटसत्त्वरूपक्रियास्थानात् ।

त्वर्थः । कारणत्वेन विशेषणे पूर्वदोषानुवृत्तिरिति भावः ॥ [f]"हस्तादी"ति। हस्ते सव्यापारे सत्यपि कदाचित्पाकानुत्पत्तेरित्यर्थः ॥

---

सू० कश्चायं(१) तद्व्यापारो नाम ? किं तज्जन्यं कारणम्?-१ उत तदाश्रयं(२) कारणं?-२ । नाद्यः, [a]"लिङ्गपरामर्शे तदसम्भवात् । *[b]पक्षे प्रथमधूमादिदर्शनस्य व्याप्तिस्मृतिद्वारा द्वितीयलिङ्गपरामर्शं व्यापारं जनयतः करणत्वमेष्टव्यम्, [c]एवं च परमार्थतो व्याप्यस्य [d]स्वरूपेण प्रमितिर्द्वितीय(३)व्याप्ततत्परामर्शव्यापारिकाऽनुमानमिष्यते ? *-इति चेन्न, [e]अन्यतो जाताग्निधूमादिव्याप्तिस्मृतौ सत्यां पक्षगतप्रथमधूमादिदर्शनस्य तद्व्यापारकत्वासिद्धेः(४) । *[f]तत्राप्यु(५)भयकर्मजसंयोगवत् तदपि कारणम्*-इति चेन्न,

टी० ॥ [a]"लिङ्गे"ति । तृतीयलिङ्गपरामर्शाव्यवहितोत्तरक्षणे एवानुमित्युत्पत्तेरित्यर्थः ॥ ननु प्रथमलिङ्गदर्शनमेव तृतीयलिङ्गपरामर्शव्यापारकमनुमितिकरणमतो नाव्याप्तिरिति शङ्कते । [b]"पक्षे"इति । व्याप्तिग्रहकाले प्रथमलिङ्गदर्शनं महानसादौ, पक्षे तु द्वितीयमत उक्तं "पक्षे"-इति ॥ एतदेव विविच्याह-। [c]"एवं चे"ति ॥ [d]"स्वरूपेणे"ति ॥ व्याप्त्यनुपधानेनेत्यर्थः । अनुमानम्=अनुमितिकरणम् ।। यत्र प्रथमं व्याप्तिविशिष्टधूमस्य पक्षो-

---

(१) { व्यापारखण्डनेनापि करणत्वस्य खण्डनम् । स्यादित्यभिप्रयन्वादी व्यापारं स निरस्यति॥ }

(२) तत् करणमाश्रयो यस्य तत्तदाश्रयम् । तदसम्भवात् = निरुक्तव्यापारासम्भवात् । (३) अत्रापि सापेक्षं द्वितीयत्वं, वस्तुतस्तु तस्य तृतीयत्वमेव । (४) द्वितीयलिङ्गपरामर्शव्यापारकत्वासिद्धेरित्यर्थः । (५) तत्रापि = अदृष्टादिजस्मृतौ, तदपि = पक्षे धूमदर्शनमपि; मकरान्तशाङ्करव्याख्यानुरोधेन तु-तत्रापि=द्वितीयलिङ्गपरामर्शेऽपि, तदपि = पक्षे धूमदर्शनजन्यस्मरणमपीत्यर्थः ।

श्रतया परामर्शस्तत्र स एवानुमितिकरणं, तस्य च निर्व्या-तया तत्र लक्षणमव्याप्तमेवेत्याह—। e"अन्यत्र"इति,=दैवादि, पक्षे धूमदर्शनात् ॥ एकस्यापि कर्मणः संयोगजनकत्वाभ्यु-यत्रोभयकर्मसन्निपातस्तत्र यथोभयस्यापि हेतुत्वं तथा दै-नव्याप्तिस्मृतेः प्रथमधूमदर्शनजन्यव्याप्तिस्मृतेश्च मिलि-तीय(१)लिङ्गपरामर्शजनकत्वमिति प्रथमलिङ्गदर्शनस्य तद्-रकस्यानुमितिकरणत्वमिति नाव्याप्तिरित्याशयाऽविद्-शङ्कते—। f"तत्रापी"ति ॥

सू० a"अभावादिशापेक्षविशिष्टप्रतिपत्तिवत्प्रागुपजा-न्हिव्याप्तधूमस्मृतेः(३)प्रथममपि योऽसौ वन्हिव्या-सोयं धूम इति परामर्शोपपत्तेः। * b नित्यमा-येस्तु तथा, नान्यत्र(४)प्रथमं तथा ?*—इति चेन्न,-क्तत्कारणोपपत्तौ 'नान्यत्रैव'मिति नियमे प्र-स्याभावात्(५)। * तस्य व्यापाराभावात् नानु-त्पादकत्वमेव *—इति चेत्, स्यादप्येवं यदि व्या-रवतः करणत्वमित्येव सिद्धं स्यात्। * तत्र धू-निर्विकल्पकस्य तद्व्यापारकस्य करणत्वम्!*-चेन्न।

टी० ॥ आशयमुद्घाटयति—। a"अभावादी"ति। प्र-गिस्मृत्यैव यथाऽभावविशिष्टज्ञानं तथा दैवाधीनव्याप्ति-लक्षणविशेषणज्ञानमहिम्ना व्याप्तिविशिष्टपर्वतीयधूम-

(१) तृतीयत्वं वास्तविकं, पक्षे धूमदर्शनापेक्षया तु द्वि-मिति बोध्यम्। (२) आशयापिहिततयेतिपाठे तु लिङ्गा-श्याच्छन्नतयेत्यर्थः। (३) दैवादिना प्रागुपजाता वन्हिव्याप्ति-र्यस्य पुंसस्तस्येत्यर्थः। प्रथमं = पक्षे लिङ्गदर्शनव्यतिरेकेण। अन्यत्र = अनुमाने। (५) प्रथमं पर्वते धूमदर्शनं विनापि व्याप्ति-वह्नितधूमेन्द्रियसन्निकर्षादिसकललिङ्गपरामर्शकारणसत्त्वे व्याप्ति-क्षापेक्षताहीने प्रथमं विशिष्टलिङ्गपरामर्शो न जायते इत्यत्र प्र-पन्नयितुमशक्यत्वादित्यर्थः।

एव प्रथमं जायते इति न ततः पश्चादपि धूमदर्शनजं(१)ह्वितीयस्मरणं मन्तव्यमित्यर्थः । अभावादयो(२)ये सापेक्षाः सप्रतियोगिकास्तद्विशिष्टप्रतिपत्तिवत् ॥ नन्वभावादिसापेक्षविशिष्टप्रतिपत्तिवत् धूमत्वविशिष्टे स्मृतव्याप्तिवैशिष्ट्यभानं प्रथमधूमज्ञानं विना न सम्भवति, तत्राभावत्वप्रतियोगित्वयोः पूर्वागृहीतयोरप्यवच्छेदग्रहध्रौव्या(३)ज्ज्ञानमिति वैषम्यं शङ्कते-। b"नित्ये"ति ॥ धूमविशेष्यकव्याप्तिविशेषणकज्ञानस्य तृतीय(४)लिङ्गपरामर्शरूपस्य प्रथममपि सम्भवान्न वैषम्यमित्याह-। c"'प्राग्'"ति ॥ ननु धूमनिर्विकल्पकं तत् सविकल्पकव्यापारकं तत्र कारणमिति शङ्कते-। d"तत्रे"ति ॥

सू० a"नित्यसङ्कुटितार्थवह्निनापि निर्विकल्पकं सविकल्पकोत्पत्तेरविरोधेन त्वदुक्तप्रक्रियानियमे प्रमाणाभावात् । *b नित्यसङ्कुटितेष्वपि निर्विकल्पकं मंस्यते?*- इति चेन्न, कारणान्तरादेव(५)तदुपपत्तौ तत्र निर्विकल्पककल्पनायां प्रमाणाभावात्; c प्रत्युत तत्सङ्कुटनस्य स्वभावानतिरेकोपगमात् । * तथापि d यत्कि-

(१) पक्षे प्रथमधूमदर्शनजमित्यर्थः । (२) "अभावादय"-इत्यारभ्य 'विशिष्टप्रतिपत्तिवदि'त्यन्तः पाठः कैश्चिदाधुनिकैर्यत्सुबोधाय 'अभावादीति'-इतिप्रतीकाऽऽदयहितोद्धारमेव पुस्तकेऽपन्यस्तः, परमत्र ग्रन्थेऽनेकत्रैवंविधस्थदर्शनाद्बहूनामनुग्रहस्य न्याय्यत्वाच्च यथाश्रुतोऽपि पाठो नायुक्त इति मन्ये । (३) तत्र = दृष्टान्ते स्वभावविशिष्टाभावत्वस्य प्रागनधिगतस्यैव प्रतियोग्यादिज्ञानमाहात्म्यादनन्तरं भानं यथा प्रतियोगिसहितप्रतियोगित्वस्यापि प्रागनधिगतस्यैवाभावरूपावच्छेदकज्ञानमाहात्म्याज्ज्ञानमित्याह-तत्रेति । अवच्छेदेति, अवच्छेदग्रहस्य = प्रतियोग्यनुयोग्यादिरूपाभावनिरूपकज्ञानस्य, ध्रौव्याद् = आवश्यकत्वादित्यर्थः । निर्णीतोऽयमेवार्थः कुसुमाञ्जलौ "अवच्छेदग्रहध्रौव्यादध्रौव्यस्य साधनात्"-इति कारिकायाम्, वक्ष्यते च व्याख्याकारः समनन्तरमेव, व्याख्यातं चेयमस्माभिरपि तत्रैव । (४) तृतीयत्वं वास्तविकम् ।

(५) कारणान्तरात्-प्रतियोग्यादिस्मरणात्, तदुपपत्तौ = अभावादिविशिष्टज्ञानोपपत्तावित्यर्थः ।

ञ्चित्तज्जनकं तदेव तत्रानुमितिकरणमास्ताम्
इति चेन्न, [e]तथेन्द्रियादेरनुमितिकरणत्वापत्ति
लमतिविस्तरेणेति। [f]शब्दश्रोत्रसन्निकर्षस्य च
व्यापारत्वप्रसङ्गात्, [g]तथाच श्रोत्रस्य शब्दप्रति
वकरणत्वप्रसङ्गात्, सन्निकर्षो हीन्द्रियव्यापार
इति, [h]व्यापारान्तरं च तस्य क्षणिकमसिद्धम्,
चोक्त एव दोषः। * [j]शब्द एव तद्व्यापारः
स्यात्? *-इति चेन्न, तस्य कर्मत्वेन करणकोटि
भावात्।

टी० ॥ विशेषणज्ञानान्तराभावे निर्विकल्पककल्पना,
व्याप्तिस्मृतिरेव विशेषणज्ञानमिति किं निर्विकल्पकक
परिहरति–।[a]"नित्ये"ति। नित्यमङ्कुठितोर्थोऽभावसमवा
अभावादिविशिष्टज्ञानेपि निर्विकल्पकापेक्षेति मतम
शङ्कते–। [b]"नित्ये"ति। उक्तं (१)चाचार्यैरपि,–"अवच्छे
व्यादध्रौव्ये सिद्धसाधनात्, प्राप्त्यन्तरेनवस्थानान्नो चे
दुर्नयः"(२)इति॥ [c]"प्रत्युते"ति। अभावादीनामिदमेव स्व
यद्विशिष्टज्ञानमात्रविषयत्वमिति त्वयाऽभ्युपगमादि
ननु परामर्शजनकतया तत्र व्याप्तिस्मृतिरेव करणं
त्याह–। [d]"यत्किञ्चिदि"ति ॥ तथा सतीन्द्रियस्या
णत्वसम्भवादनुमितित्वप्रत्यक्षत्वसङ्करापत्तिरित्याह–।

(१) एतच्छङ्कासमाधानतयोदयनाचार्य्यैरप्युक्तमित्यर्थः।
(२) 'दुर्घटः"–इत्यपि पाठः। निरुक्तकारिकार्थस्तु–ननु
पलब्ध्या निर्विकल्पत्वेन विषयीकृत एव घटाभावादिरि
भाववद्भूतलमिति (घ्राणजसौरभोपनयानन्तरं सुरभि
वत्) सविकल्पतया गृह्यते इत्यभावग्रहं प्रत्यनुपलब्धिरेव कर
न्द्रियं, तस्याभावेन समं प्रत्यासत्तेरभावात्, विशेषणताया
न्धान्तरगर्भत्वात्। तथाहि–विशेषणत्वं नाम केनापि सम्बन्धे
श्चिद्वृत्तित्वं, यथा संयोगेन भूतले घटस्य वृत्तित्वं भूतले
विशेषणता, नचाऽभावो भूतलादौ केनापि संयोगादिसम्ब
येन तस्य विशेषणता स्यादित्यत आह–"अवच्छेदे"ति।

न्द्रियादेरि"ति ॥ 'तज्जन्यं तज्जन्यकारणं व्यापार'इति यद्व्यापारलक्षणमुक्तं तत्राव्याप्तिमाह—।[f]"शब्दे"ति । तत्सन्निकर्षस्य समवायस्याजन्यत्वादित्यर्थः ॥ मास्तु सन्निकर्षो व्यापार इत्यत आह—।[g]"तथाचे"ति ॥ व्यापारान्तरमेव श्रोत्रजन्यमस्त्वित्यत आह—।[h]"व्यापारान्तरमि"ति ॥ [i]"स्थिरे" इति। इति। सन्निकर्षरूपे इत्यर्थः॥ [j]"शब्द एवे"ति । श्रोत्रजन्यत्वात् श्रोत्रजन्यशब्दसाक्षात्कारजनकत्वाच्छब्द एवात्र व्यापार इत्यर्थः ॥

सू० * [a]"क्वचित्तयोरेकत्वेपि का क्षतिः?-इति चेन्न,[b]शब्दबुद्धौ कार्यायामुपधायकत्वेन(१)प्रविष्टस्य शब्दस्य करणव्यापारतया करणकोटावपि प्रवेशनेंशतोपि नियम्यनियामकत्वविरोधापत्तेः । * [c]घटादिबुद्धौ चक्षुरादेश्चक्षुर्घटादिसंसर्गव्यापारवत्त्वेपि सममिद(२)म् ?*-इति चेत्, [d] किं न(३)स्यात् । तथाच—

प्रत्यक्षं प्रति प्रतियोगिज्ञानं कारणं तन्मते ऽवच्छेदग्रहस्य ( =प्रतियोगिग्रहस्य ) ध्रौव्यात् ( =आवश्यकत्वात् ) नियमतः प्रतियोगिविशिष्टाभावज्ञानोदयेन न तस्य निर्विकल्पकत्वम्, यन्मते च प्रतियोगिज्ञानमभावप्रत्यक्षं प्रति न कारणं तन्मतेऽवच्छेदग्रहस्य ( =प्रतियोगिग्रहस्य )अभावबुद्धिं प्रति कारणत्वेनाऽध्रौव्येपि (=अनावश्यकत्वेपि) इन्द्रियादेव तदुत्पत्तिर्भविष्यतीति सिद्धसाधनात् (=अभावबुद्धिं प्रति कारणत्वेन सिद्धस्यैवेन्द्रियस्य कारणत्वेन मयापि वाच्यत्वात् ) नानुपलब्धिः करणम् । सिद्धसाधनमत्र प्रतिवन्दिस्थानापन्नं ग्राह्यम् । यदि चाभावीयविशेषणतायाः माप्त्यन्तरं ( =सम्बन्धान्तरं ) वाच्यं तदा तस्यापि सम्बन्धान्तरं तस्यापि सम्बन्धान्तरमित्यनवस्थाऽऽपद्येत; तस्मान्न विशेषणतायाः स्वरूपसम्बन्धरूपायाः सम्बन्धान्तरम् । न चेदभावस्याऽधिकरणेन स्वरूपसम्बन्धस्तदाऽनुपलब्धिकरणतावादिभट्टमतेपि अन्यः प्रकारो दुर्घटः, भूतले घटाभावसम्बन्धावगाहिन्याः घटाभाववद्भूतलमिति सर्वानुभवसिद्धप्रतीतेर्वायूरूपवानित्यादिप्रतीतिवद्भ्रमत्वमापद्येतेत्यर्थः ।

(१.) उपधायकत्वेन=स्वाकारसमर्पकत्वेन । (२) इदम्=दूषणम् । (३) "किं नः"-इत्यपि क्वचित्पाठः ।

[e]बाधेऽ(१)द्रूढेन्यसाख्यात् किं द्रूढेन्यदपि बाध्य
क्व ममत्वं मुमुक्षूणामनिर्वचनवादिनाम् ॥
तथाहि मिथिलानाथो मुमुक्षुर्निर्मम: पुरा।
आहेदं मिथिलादाहे न मे किञ्चन दह्यते ॥३४॥

[f]नापि द्वितीय:, [g]लिङ्गपरामर्शस्यानुमितावका
प्रसङ्गात्, [h]निर्विकल्पकस्यापि तस्योपगमे सवि
कानाश्रयत्वात् ।

टी० ॥ [a]"क्वचिदि"ति । निमित्तसमावेशा(२)दि
[b]"शब्दे"ति। एकस्यैव शब्दस्य कार्यबुद्धिविशेषकतया(३)क
करणव्यापारतया च कारणत्वं विरुद्धमित्यर्थ: । शब्दप्र
यथाकथञ्चिदुपपत्तावपि शब्दप्रागभावग्रहे नैवमपीति
(४) ॥ ननु नियम्यनियामकत्वविरोध:, (जन्यजनकत्व
घटादिबुद्धावपि, यतो घटबुद्धिर्जन्या घटेन्द्रियसन्निकर्ष
इति घटस्यैव जन्यजनककोटावन्तर्भावादित्याह—। [c]"घट
ति ॥ अनेन विरोधेन सर्वं निवर्ततां नाऽद्वैतवादिन: किञ्चि
मित्याह—। [d]"किन्ने"ति ॥ एतदेव स्पष्टयति—। [e]"बाध
तदाश्रयं कारणं व्यापार इति दूषयति—[f]"नापी"ति ॥
ङ्गे"ति । परामर्शाश्रितस्य व्यापारस्याभावादित्यर्थ: ।
निर्विकल्पकमपि न करणं, परामर्शस्य तद्व्यापारत्वेनापि
तदनाश्रितत्वादित्याह—। [h]"निर्विकल्पकस्यापी"ति ॥

(१) बाधे=खण्डनकोटौ । (२) निमित्तसमावेशात्
णयोर्यन्निमित्तं तस्यैकत्र समावेशादित्यर्थ: । (३) कार्यबुद्धि
तया = शब्दबुद्धिरूपं यत्कार्यं तस्य विषयविधया व्यावर्तकत्व
षणतया तत्कुक्षिप्रविष्टतयेति भाव: । (४) शब्दप्रध्वंस प्रति
योगिविधया शब्दस्य जनकत्वाच्छब्दप्रध्वंसविशिष्टज्ञाने शब्दस्
त्जनकत्वोपपादनेपि शब्दप्रागभावे प्रतियोगिविधयापि शब्दस्
त्वाभावेन तद्विशिष्टज्ञानेपि न कारणतेत्यर्थ: । वस्तुतस्तु शब्द
शब्दप्रध्वंस:, तत्र च शब्दो न विशेषणं, येन विशेषणे कारण
विशिष्टेपि स्यादित्यभिप्रेत्योक्तं कथञ्चिदिति ।

मू० [a]अतद्धेत्वाश्रयस्य([1])तद्धेतुव्यापारत्वे चात्याप्तेः । किंच, फलाव्यभिचारित्वं [b]किं तस्मिन्नेव काले फलसत्त्वनियमः १ उत तदनन्तरं फलसत्त्वनियमः २ नाद्यः, [c]कारणस्य पूर्वभाविताया अवश्यं वक्तव्यत्वात् । न द्वितीयः, आनन्तर्य्यं यद्यव्यवहितानन्तर्य्यं विवक्षितं [d]तदा यत्किञ्चिद्व्यापारवतः करणत्वपक्षे हस्तादेरकरणत्वापातः, [e]आफलव्यापारवतस्तु तथात्वे कर्त्त्रादिष्वतिव्याप्तिः । * अथ व्यवहितस्याप्यानन्तर्य्यं विवक्षितं * ([2]), [f]तथापि यत्किञ्चिद्व्यापाराभिप्रायेन्तरायसम्भवाद्धस्ताद्यव्याप्तिः, आफलव्यापाराभिप्राये च व्यवधानासम्भवात् [g]कारकमात्रं करणमित्युक्तं स्यात् । व्यापारवतश्च तत्फलाव्यभिचारः—इति किं तद्व्यापारस्य फलाव्यभिचारित्वं ?-१ व्यापारविशिष्टस्य वा ?-२ । नाद्यः, हस्ताद्यकरणत्वापातात् । अत एव न द्वितीयः,

टी० ॥ नन्वात्मनिष्ठ एव परामर्शो निर्विकल्पकस्यानुमितिकरणस्य व्यापारः स्यादित्यत आह—। [a]"अतदि"ति । करणाश्रितस्यैव करणव्यापारत्वमुचितं, नतु तत्क्रियाकारणान्तराश्रितस्या([3])पि, तथा सति सहकारिमात्रं करणव्यापारः स्यादित्यर्थः । स चासौ हेतुश्चेति तद्धेतुः ॥ [b]"किं तस्मिन्नि"ति । यदा करणं तदा फलमित्यव्यभिचार इत्यर्थः ॥ [c]"कारणस्ये"ति । समकालयोः कार्यकारणभावाऽभावादित्यर्थः ॥ [d]"तदे"ति । नहि प्राथमिकहस्तव्यापारानन्तरमेव पाकरूपं फलमित्यर्थः ॥ [e]"आफले"ति । कर्त्तुरपि फलपर्यन्तं व्यापारावृत्तेरित्यर्थः ॥ [f]"तथापी"ति । हस्तव्यापारे सत्यपि कदा-

---

(१) अनुमित्यहेत्वात्माश्रितस्याऽनुमितिहेतुनिर्विकल्पकलिङ्गपरामर्शव्यापारत्वे चेत्यर्थः । (२) तथा च न हस्तादावव्याप्तिरिति शेषः । (३) सा चासौ क्रियेति तत्क्रिया, तस्याः कारणं करणं, तद्भिन्नाश्रितस्येत्यर्थः ।

चित् फलानुत्पादाद्व्यवधानेऽप्यव्यभिचाराभावादित्यर्थः "कारकमात्रमि"ति । आफलव्यापारानुवृत्त्या कारकमा... फलाव्यभिचारिव्यापारवत्त्वादित्यर्थः ॥

मू० [a]यागादेः स्वर्गाद्यकरणत्वापाताच्च, [b]अपूर्वव... र्थत्ववादिनापि चरमयागस्य फलकरणत्वाभ्युप... दिति । * [c]अथोच्यते यद्वानेव करोति तत् क... यद्वानेव प्रमिमीते तत् प्रमाणम् * । मैवम्, ... धर्मप्रध्वंसादीनामकरणानां प्रमाणत्व(१)प्रस... *येन क्रियाकारणेन युक्त एव प्रमिमीते? *-इति, [d]सुखादिप्रमितौ तत्करणव्यापारस्यापि का... प्रसङ्गात् । * ओम् ? *-इति चेन्न, अव्यापार... कारकत्वेन तद्विशेषकरणाभावानुपपत्तेः॥ * 'व्या... वतापि *-इति चेन्न, [f]एवं हि व्यापारवत एव क... न स्यात्, नहि व्यापारवतस्तस्य व्यापारान्तरव...

टी० ॥ [a]"यागादेरि"ति । यागादेश्चिरनष्टत्वेना... विशिष्टस्य फलाव्यभिचाराभावादित्यर्थः ॥ ननु मा भू... करणं, नहि यजेतेतिलिङा यागसाधनत्वं बोध्यते कि... र्वकार्य्यत्वमिति नाव्याप्तिरित्यत आह—। [b]"अपूर्व... कार्यत्वा(२)न्वयान्यथानुपपत्त्या यागसाधनत्वस्यौपादा... गुरुणापि स्वीकारात्, अन्यथा नियोज्यान्वययोग्यता न स... तन्मते यागस्याकरणत्वप्रसङ्गस्तुल्य इत्यर्थः ॥ चरमं क... पस्थित्यनन्तर(३)मुद्योतकरः करणलक्षणं शङ्कते—। [c]"अथो...

(१) निरुक्तप्रमाणलक्षणकरणे सुखादिध्वंसादिमानेवा... घटादिकं प्रमिमीते इति सुखादिध्वंसादेरपि घटादिप्रमा प्र... घटादिप्रमाकरणत्वप्रसङ्ग इत्यर्थः । (२) कार्य्यत्वस्य = कृतिसा... नियोगे यागनिष्ठकृतिसाध्यत्वं विनाऽन्वयाऽनुपपत्त्या याग... स्य = यागनिष्ठेष्टसाधनत्वस्य, औपादानिकस्य—अर्थापत्तिप्रमा... गुरुणापि स्वीकाराद्; अन्यथा नियोगे नियोज्यस्य = कार्य्यबो... ज्यनियोजकभावरूपान्वययोग्यता न स्यादिति पङ्क्त्यर्थः । (३) ... त्वोपस्थित्यनन्तरमुद्योतकरः चरमं करणलक्षणं शङ्कते-इत्यन्व...

d"सुखादौ"ति । मनस्तत्र करणं न तु तदात्मसंयोगः, त्वल्लक्षणेन तस्यापि करणत्वप्रसंग इत्यर्थः ॥ c"व्यापारवतापी"ति । येन क्रियाकारणेन व्यापारवता युक्तः प्रमिमीते तत् करणमिति लक्षणमित्यर्थः ॥ f"एवं ह्यो"ति । व्यापारविशिष्टस्यैव करणत्वात्तस्य व्यापारान्तराभावादकरणत्वं स्यादित्यर्थः ॥

सू० a*अथ व्यापारवतो व्यापारांशमपहाय करणत्वं, तत्र चास्त्येवेदं लक्षणं-यस्य करणत्वमस्ति तस्य व्यापारवत्त्वमप्यस्तीति व्यापारवत्करणमुच्यते इति* । न । bपटमुद्यम्य निपात्य च प्रक्षालयतः c स कर्म्मैव हि करणं स्यात् । dकिंच, किं(१)तस्य करणत्वम् ? इति लक्ष्यीभूतस्यावश्यं वक्तव्यत्वात् यद्युक्तलक्षणवत्त्वमेव तत् स्यात्तदात्माश्रयापातः स्यात् । *eस्वरूपम्?*-इति चेत्, स्वरूपस्य प्रतिकरणं भिन्नतया एकपरित्यागेनापरत्र लक्षणं गतमित्यतिव्यापकं स्यात्, न हि चक्षुषः स्वरूपं श्रोत्रस्येति । fकिंचैवमिन्द्रियादेः प्रमाणत्वं न स्यात्, अतद्वतोऽप्यनुमानादेः प्रमातृत्वात् । *gनासौ प्रत्यक्षम्?*-इति चेन्न, hनेदमपि हि प्रत्यक्षमात्रस्य लक्षणं भवता क्रियते ।

टी० ॥ व्यापारवत्ता न विशेषणं, किन्तूपलक्षणमिति शङ्कते-। a"अथे"ति ॥ b"पटमि"ति । यद्वानेव करोतीति लक्षणेन प्रक्षालनक्रियायां पटस्य करणत्वापत्तिः, पटवत एव प्रक्षालनक्रियाकर्तृत्वात् । 'उद्यम्य निपात्ये'त्यनेन पटवत्ता कर्तृका ॥ c"स कर्म्मैवे"ति । स=पटः कर्म वस्तुगत्या भवति त्वल्लक्षणेन करणं स्यादित्यर्थः ॥ लक्ष्यतावच्छेदकापरिचये लक्षणमतन्त्रमित्याह-। d"किंचे"ति ॥ e"स्वरूपमि"ति । स्वरूपं यदि

(१) तस्य=तन्निष्ठं ( करणनिष्ठम् ) किं करणत्वमिति लक्ष्यतावच्छेदकत्वेन लक्ष्यीभूतस्यावश्यं वक्तव्यत्वादित्यर्थः ।

लक्ष्यं तदा श्रोत्रेऽतिव्याप्तिः, लक्ष्यीभूतस्वरूपातिरिक्ते ... दित्यर्थः ॥ यद्वानेव प्रमिमीते इत्यत्र दोषान्तरमाह-। ... ति । अनुमितिलक्षणप्रमायां प्रमातुरिन्द्रियवत्त्वनियमा... त्यर्थः ॥ प्रत्यक्षप्रमायामिन्द्रियवत्त्वनैयत्यमेवेति न ... इति शङ्कते-। [g]"नासाधि"ति॥ प्रमामात्रे यदव्यभिचारलक्ष... णमिति भवतो विवक्षितं, नचेन्द्रियलिङ्गादौ क्वापि तथा... तदसङ्ग्रह एवेति परिहरति-। [h]"नेदमि"ति ॥

सू० [a] * ननु यद्यपीन्द्रियादेर्विशेषतो व्यावृत्तिस्त... तज्जातीयकरणमात्रतया तज्जातीयमात्रस्या... त्तिरेव ([1]), [b]नह्यनुमित्यादावप्यकरणजाती... प्रमिमीते इति*? । न । [c]करणतया साधारणभा... द्यापि निर्णेतुमशक्यत्वात् । [d]*अथ यां प्रमां... नेव जनयति तस्यां तत्करणम्*-इति, मैवम्, ... नाच्छादनादेरपि करणत्वप्रसङ्गात् । *[e]यज्जाति... *-इति चेन्मैवम्, [f]परोक्षजातीयां प्रमां लिङ्ग... शब्दवानेव वा जनयतीतिनियमाभावात्तस्या... त्वप्रसङ्गात् । [g]*साक्षात्कारित्वानुमितित्वाद... तिभेदा विवक्षिताः ?*-इति चेन्न, [h]प्रत्येकमु... भागाव्याप्तेः, समभूयोपादाने सर्वाव्याप्तेः([2])...

टी० ॥ ननु यद्यप्यानुमानिक्यां प्रमायां न चक्षु... ष्यं तथापि करणजातीयवत्ता कर्तुस्तत्राप्यस्त्येवेति ... [a]"नन्वि"ति ॥ एतदेव स्फुटयति-। [b]"नही"ति ॥ ... सिद्धौ तज्जातीयवत्ता दुर्ग्रहेति परिहरति-। [c]"करणत... प्रमाव्यक्तौ यद्वत्त्वनियमं शङ्कते-। [d]"अथेति ॥ [e]"यज्जाति... ति । प्रत्यक्षत्वादिप्रमाजातीयजनने कर्तुः कौपीनव... नास्तीति न तत्रातिव्याप्तिरित्यर्थः ॥ एवं सति शब्दवि...

(१) 'अव्यावृत्तिरेवे'त्यतोऽनन्तरं 'मनसः करणजाती... विद्यमानत्वादि'ति हेतुः पूरणीयः । (२) सर्वाऽव्याप्तिः...

करणत्वप्रसङ्गः, नहि परोक्षजातीयप्रमाजनने कर्तुरेतदुभयव्यवस्तानियम इत्याह—। [f]"परोक्षे"ति ॥ परोक्षत्वं न जातिः किंतु साक्षात्त्वानुमितित्वादय इति ते एव विवक्षिता इत्याह—। [g]"साक्षादि"ति ॥ 'यद्वानेव साक्षात्कारिणीं प्रमां जनयती'तिलक्षणे लिङ्गाद्यव्याप्तिः, यद्वानेव सर्वां प्रमां जनयतीतिलक्षणे सर्वाऽव्याप्तिरित्याह—। [h]"प्रत्येकमि"ति ॥

सू० [a]अनियमेनोपादाने च लक्षणाननुगमापातादिति । * यदभावात् कर्त्तृकर्म्मणी क्रियां न जनयतस्तत्करणम्, तेन यदभावात्प्रमातृप्रमेये प्रमां न जनयतस्तत्प्रमाणमिति लक्षणम् ? *—इत्यपि न युक्तम् । किं प्रमातृप्रमेये सती यत्र न जनयतः ? उतासती अपि ? । [b]आद्येऽतीतानागतानुमानादिकरणाव्याप्तिः नापि द्वितीयः, प्रमातृप्रमेययोरपि प्रसङ्गात्; [c]यथा हि चक्षुराद्यभावात् प्रमा न जायते तथा प्रमातृप्रमेययोरप्यभावात्, अन्यथा तयोः कारणत्वमेव न स्यात् । [d]एतेन सामान्यतोभिधानं प्रत्युक्तम्, [e]अस्मदादिकर्तृसापेक्षेश्वरकर्तृके चास्मदादिज्ञाने अस्मदादिकर्तृकरणत्वापत्तेः(१) । [f]एवं च सति प्रकारभेदेनापि प्रमाणप्रमात्रादिव्यवस्थासमर्थना कृता न स्यात्,

टी० ॥ यस्यकस्यचिदुपादानेननुगम इत्याह—। [a]"अनियमेने"ति ॥ [b]"आद्ये"इति । अतीतादिस्थले प्रमेयासत्त्वादित्यर्थः ॥ [c]"यथा ही"ति । कारणमात्रव्यतिरेकस्यैव कार्यव्यतिरेकप्रयोजकतया कारणमात्रातिव्याप्तिरित्यर्थः ॥ ननु यदभावात् प्रमातृप्रमेये प्रमां न जनयत इत्येव लक्षणं, न तु तयोः सत्त्वमसत्त्वं वा विवक्षितमित्यत आह—। [d]"एतेने"ति । कारणमात्रातिव्या-

१ अस्मदादेः कर्तुरस्मदादिज्ञाने करणत्वापत्तेरस्मदादिव्याप्तिरेकेणास्मदादिज्ञानस्येश्वरेणाप्यजननादित्यर्थः ।

त्त्यैवेत्यर्थः ॥ ईश्वरस्य कर्तुरस्मदादिव्यतिरेकेण प्रमानु-
कत्वादस्मदादीनामपि करणत्वं स्यादित्याह-। [e]"अस्मा...
ति ॥ एवं च प्रवृत्तिनिमित्तभेदा(१)दपि करणत्वादिव्यव-
स्यादेकेनैव प्रकारेण तदुपपत्तेरित्याह-[f]"एवं चे"ति ॥

मू० [a]येनैव रूपेण ( कर्तृत्वादिना ) तस्य प्रमायाम्प्र-
स्तेनैव तद्व्यतिरेकस्य प्रमानुत्पत्तौ प्रयोजक-
दिति । * चरमव्यापारवत्त्वं करणत्वम् ? *-इति
न, [b]व्यापाराभावाल्लिङ्गपरामर्शस्याकरणत्वाप-
* नच सविकल्पकव्यापारवतो निर्विकल्पकस्य
प्रामाण्यं*, [c]केवलविकल्पनीयलिङ्गविषये तदनुप-
[d]संस्कारादिपर्यन्तानुसरणे चानुमितेस्तज्जन्यत्व-
माणाभावात्, कार्य्यहेतोश्च कारकाव्यापारा-
[e]अपि चाज्ञातकरणत्वापातात् । [f]*नच लिङ्गमेव-
मर्शव्यापारवत्तया करणम्-इति युक्तम्*, [g]अनु-
नुमानादौ (२) परामर्शस्यालिङ्गजत्वेन तद्व्या-
वत्त्वानुपपत्तेः ।

टी० ॥ ननु स्वातन्त्र्यं कर्तृत्वं कर्तृनिष्ठप्रमाव्यतिरे-
जकव्यतिरेकप्रतियोगित्वं च करणत्वमिति कथं सोपा-
इत्यत आह-। [a]"येनैवेति । कार्यव्यतिरेकप्रयोजकव्यति-
तियोगित्वस्य सर्वकारणसाधारणत्वादिति भावः ॥

(१) प्रवृत्तिनिमित्तभेदात्=प्रकारभेदात् । (२) अनु-
महत्वं क्वचित्प्रासकाष्ठाकं धर्मत्वादित्येवमनुमितेन परममह-
यद् आकाशादावाकाशः सर्वगतः परममहत्त्वादिति सर्वगतत्वा-
तत्र परममहत्त्वस्य हेतोर्न स्वविषयकपरामर्शजनकत्वं, पारिमा-
ण्याऽवृत्तिपरममहत्त्वभिन्नानामेव कारणत्वसाधर्म्यात्, तथा
लिङ्गस्य परामर्शव्यापारवत्तया करणत्वमयुक्तमिति फक्किकार्थः
प्रत्यक्षात्मकज्ञाने एव विषयस्य कारणत्वेनाकाशीयपरममहत्त्व-
चानुमित्यात्मकत्वेनाऽप्रत्यक्षत्वान्न तत्र परममहत्त्वलक्षणलिङ्ग-
विधया जनकत्वमिति बोध्यम् ।

व्यापारापेक्षया चरमत्वं विवक्षितं, लिङ्गपरामर्शे व्यापारवत्त्वैव नास्ति कुत्र चरमत्वमिति तदव्याप्तिरित्याह—। [b]"व्यापाराभावादि"ति ॥ [c]"केवले"ति। अभावसमवायादिः केवलनिर्विकल्पकमात्रवेद्यः केवलविकल्पनीय,स्तत्र निर्विकल्पकाभावादित्यर्थः॥ ननु संस्कार एव ध्वंसो वा परामर्शव्यापारः स्यादित्यत आह—। [d]"संस्कारे"ति। नहि तज्जन्यत्वमात्रं व्यापारलक्षणं, किंतु तज्जन्यजनकत्वपर्यन्तमित्यर्थः॥ लिङ्गपरामर्शस्य करणत्वेऽनुमितेरज्ञातकरणतया प्रत्यक्षत्वापत्तिरित्याह—। [e]"अपिचे"ति ॥ [f]"नच लिङ्गमेवे"ति। तच्च(१)ज्ञातमेव करणमित्यर्थः॥ [g]"अनुमिते"ति। आकाशादौ परममहत्त्वादिना सर्वगतत्वाद्यनुमानादौ लिङ्गपरामर्शस्य लिङ्गाजन्यत्वान्न तद्व्यापारकतया लिङ्गस्य करणत्वमित्यर्थः॥

मू० "आप्तोक्त्यादिभिस्तत्रासीद्धूम इति प्रतीत्या तदा तत्र वन्हिरप्यासीदिति यदनुमानं तत्रासत्त्वाद्धूमस्य परामर्शव्यापारवत्तया करणताया दूरनिरस्तत्वात्। किंच, यत्किञ्चिदपेक्षया चरमव्यापारवत्त्वस्य सर्वकारकसाधारण्यात्, सर्वकारकापेक्षया चरमव्यापारवत्त्वस्य [b]स्वापेक्षया चरमत्वानुपपत्त्या सर्वत्रासिद्धेः। * कर्त्रपेक्षया * ?-इति चेन्न, [c]कर्तृधर्मिमात्रापेक्षया विवक्षितत्वे कर्त्तरि प्रसङ्गतादवस्थ्यात्; व्यापारवत्कर्त्रपेक्षाभिप्राये च कर्त्तरि स एव प्रसङ्गः, [d]एकव्यापारवत्कर्त्रपेक्षयाऽपराऽपरकर्तृव्यापारस्य चरमव्यापारत्वात्, [e]यावद्व्यापारवत्कर्त्रपेक्षापक्षे तु विवक्षितमपि करणं न स्यात्, आफलसिद्धेः कर्तृव्यापाराविरामात्।

टी० ॥ आदिपदग्राह्यमाह—। [a]"आप्ते"ति। आप्तवा-

(१) तद्=लिङ्गम्।

क्यात् स्मरणाद्वा अतीतधूमादिपरामर्शेनातीतवन्ह्यादे लिङ्गस्य व्यापाराभावात्(१)करणत्वमनुपपन्नमित्यर्थः॥ पेक्षये"ति। यद्यपि स्वापेक्षयापि स्वव्यापारस्य चरमत्वं वति तथापि व्यापारविशिष्टस्यैव करणत्वमिति विव दमुक्तम्॥ c"कर्तृधर्मी"ति। कर्तृव्यापारस्यापि कर्त्रपेक्षया मत्वादित्यर्थः॥ प्रसङ्गमेव स्फोरयति—।d"एके"ति॥ याव व्यापारापेक्षया चरमत्वं विवक्षितमतो न कर्त्तरि प्रसङ्ग आह-।e"यावदि"ति। फलाव्यवहितपूर्वक्षणपर्य्यन्तं कर्तृव्य सत्वात्तदपेक्षया चरमत्वं करणव्यापारस्य नास्तीत्यसंभव इ

मू० aव्यापारस्य विच्छेदे तद्धेतुलक्षणप्रक्षीणतापत्ते यद्व्यापारानन्तरं कारकान्तरं न व्याप्रियते त व्यापार(२)मिष्टम्? *—इति चेन्न, bसेश्वरपक्षे व्यापाराविरमात् तदाऽऽनन्तर्यासिद्धस्तत्का पातात्, cअनीश्वरपक्षे चाक्षयोगादिभिरेव सर्व कर्मण्यपि प्रसङ्गात्। dछेद्यादेर्हि करणसंयो व्यापारश्चरम एवेति कुतस्तद्व्यवच्छेदो, e व्याप्तेश्चेति।* अनन्तरफलं(३)करणम् * ?— न, अविशेषिताऽऽनन्तर्यस्य सर्वकारणसाधार fअव्यवहितानन्तर्य्यस्य व्यापार्यपेक्षस्य च(४) दव्यापनात्, व्यापारापेक्षस्य च हस्ताद्यव्या

टी०॥ ननु कारकान्तरव्यापारमुत्पाद्य कर्तृव्यापार सम्भवत्येव कर्तृव्यापारापेक्षया चरमभावी करणव्याप नासम्भवदोष इत्यत आह। a"व्यापारस्ये"ति। तर्हि

---

(१) लिङ्गस्यैव तत्राभावेन तत्सम्बन्धिव्यापारस्याप्यभावा (२) चरमव्यापारो यस्यास्ति तच्चरमव्यापारम्, "चरमव्याप —इति पाठस्तु मामादिकः। (३) अनन्तरम् अव्यवहितोत्तर रूपं फलं यस्य तदिति बहुब्रीहिः। (४) चकारो भिन्नक्रमः तानन्तर्यस्ये'त्यनन्तरं सम्बध्यते।

प रणनोपक्षीणव्यापारः कर्ता कारणमेव न स्यादन्यथासिद्धत्वादित्यर्थः ॥ [b]"सेश्वरे"ति । अन्त्यतन्तुसंयोगादिलक्षणचरमव्यापारस्यापीश्वरजन्यतया तदीयत्वं, तदनन्तरं (१)च कारकान्तरं न व्याप्रियते इतीश्वरकरणत्वापत्तिरित्यर्थः ॥ [c]"अनीश्वरे"ति । इन्द्रियसन्निकर्षलक्षणकरणव्यापारस्य कर्मसाधारणतया कर्मण्यतिव्याप्तिरित्यर्थः ॥ न केवलं ज्ञानकर्मणि, किंतु छिदादिक्रियाकर्मण्यपीत्याह—। [d]"छेद्यादेरि"ति ॥ [e]"हस्ते"ति । तद्व्यापारस्याचरमत्वादित्यर्थः ॥ [f]"अव्यवहिते"ति । अव्यवहितोत्तरक्षणवर्त्तिफलकत्वम् ? अव्यवहितोत्तरक्षणवर्त्तिफलव्यापारवत्वं वा तद्विवक्षितम् ? आद्ये—"यागादी"ति । अन्त्ये—"हस्तादी"ति ॥

मू० [a]"व्यापारपरम्परापेक्षस्य सर्वकारकव्यापनात् । [b]किंच, तत्कार्य्यो यदि(२)क्रियाहेतुस्तद्व्यापार इष्टस्तदेन्द्रियकार्यो लिङ्गपरामर्शोऽनुमितिक्रियाहेतुरितीन्द्रियकरणिकानुमितिः प्राप्ता । * [c]अथ हेतोः सतः कार्यः क्रियाहेतुस्तद्व्यापारः, तथा सति चानुमित्यहेतोरि-

(१) यद्यपि कदाचिद् ईश्वरव्यापारोपरमे एव तदानन्तर्य्यमपि व्याहतत्वेनदसित "सेश्वरपक्षे कर्तृव्यापाराऽविरमादि"ति मूलोक्तेस्तथा च "तदनन्तरमि"त्युक्तेर्विरोधः प्रतिभाति तथापीश्वरीयसामान्यव्यापारत्वेन तदानन्तर्य्याऽसिद्धिरन्त्यतन्तुसंयोगादितत्तद्व्यापारत्वेन चानन्तर्य्यावधित्वमिति न विरोधः । मूलेऽपि च अन्त्यतन्तुसंयोगादिलक्षणचरम व्यापारस्यापीश्वरीयत्वे कर्तृव्यापाराऽविरमादिति हेतुर्बोध्यः, कारकान्तरव्यापारस्य च तदानन्तर्य्याऽसिद्धिरिति ध्येयम् । व्याख्यान्तराऽभिमतोऽत्र मूलस्य यथाश्रुतोऽर्थस्तु-ईश्वरव्यापारः प्रयत्नरूपस्तस्य नित्यत्वात्तदनन्तरमपि कारकान्तरं न व्याप्रियते तदानन्तर्याभावात्कर्तुरीश्वरस्य करणत्वं स्यादिति (२) यदि तत्कार्य्यः (=कुठारादिकरणकार्य्यः) क्रियाहेतुः (=फलीभूतच्छिदादिक्रियाहेतुः,-उद्यमननिपातनादिः) तद्व्यापारः (=कुठारादिकरणव्यापारः)-इत्यन्वयः । "यदि क्रियाहेतुस्तद्व्यापारः"-इत्यस्य स्थाने "यत्क्रियाहेतुस्तद्व्यापारः" इति पाठस्तु भ्रमविजृम्भितो ज्ञेयः । यद्वा, यादृशक्रियां प्रति हेतुस्तद्व्यापारः=तादृशक्रियाजनककरणव्यापारा इति तदर्थः ।

न्द्रियस्य कुतः करणत्वं स्यात् *-इति, मैवम्। तद्धेतुत्वं यन्नास्त्यनुमिताविन्द्रियस्य ? । * नि पूर्वभावित्वम् ?*-इति चेत्, अस्ति तावत्पू वित्वं, नियतत्वमपि यदि कारणतायां प्रयोज च्छसि तदा भवतैव यतितव्यं [d]केनचिद्रूपेणे दे र्नियतत्वं प्रति, [e]अन्यथा लिङ्गेन्द्रियादेः प व्यभिचारादकरणिकैव प्रमा स्यात्।

टी० ॥ ननु हस्तस्यापि पाकाव्यवहिततेजःसंयो व्यापार एवेति नाव्याप्तिरित्यत आह—। [a]"व्यापारे"ति॥ कर्मणोरपि परम्परया तद्व्यापारकत्वादित्यर्थः ॥ अव्य नन्तरफलकव्यापारवत्त्वे करणलक्षणे दोषान्तरमाह—। ति । तज्जन्यस्तद्व्यापारः ? तज्जन्यः सँस्तज्जन्यजनको त्वमयथापीन्द्रियस्य परामर्शव्यापारकतयानुमितिकरणत्व रित्यर्थः ॥ नन्विन्द्रियस्य परामर्शस्तदा व्यापारः स न्द्रियमनुमितिजनकं स्यान्नचैवमित्याशङ्कते—। [c]"अथेति चिदि"ति । प्रमात्वावच्छिन्नकार्य्यं प्रति प्रमाणत्वेन तायां प्रमाणजातीयस्येन्द्रियस्यापि प्रमानियतपूर्ववर्तित्व येवेष्टव्यत्वादित्यर्थः ॥ ननु प्रमामात्रं प्रति प्रमात्व कारणता, किं नामेन्द्रियत्वलिङ्गत्वादिनेति नोक्तदोष आह—। [e]"अन्यथे"ति । समान्यावच्छिन्नं प्रति विशेषेण व्यभिचारान्न सम्भवतीत्यर्थः ॥

सू० [a]मनःसंयोगादेरेव तथात्वे चाप्रमासाधारण्य पिचाक्षादेरकरणत्वापातः, यत्सामान्ये यत्स प्रयोजकं तद्विशेषस्यैव तद्विशेषे प्रयोजकत्वद र्शनात्; ततो येन केनापि रूपेणेन्द्रियस्य नियतत्वमुपपाद्यते तेनैव रूपेण प्रसङ्गोप * [c]अथ प्रमात्वे तत् प्रयोजकं, नानुमिति *-इवेति चेन्न, [d]निरुपाधिकत्वाविशेषेणा

धिक्यात्; सामान्यप्रयोजकत्वेन विशेषत्यागानवकाशात्; [e]अन्यथा व्यक्तेरकरणत्वापत्तेः।

टी०॥ ननु तथापि नेन्द्रियस्याऽनुमितिकरणत्वं, यतः(१) प्रमात्वावच्छेदेन व्यापकस्य मनःसंयोगस्यैव करणत्वकल्पना, दित्यत आह—। [a]"मन" इति। प्रमात्वावच्छेदेन मनःसंयोगस्य न कारणत्वं किंतु ज्ञानत्वावच्छेदेनैवेति न तस्य प्रमाणत्व, प्रमां प्रत्यासाधारणकारणस्य प्रमाणत्वौचित्यादित्यर्थः॥ [b]"अपि चे"ति। इन्द्रियलिङ्गादिसाधारणरूपेण प्रमां प्रतीन्द्रियादेरकारणत्वे साक्षात्कारादिकारणतापि न स्यादिति सामान्येन प्रयोजकतायामिन्द्रियस्यापि तेन रूपेणानुमितिनियतपूर्ववर्तितयाऽनुमितिकारणत्वं स्यादेवेत्यर्थः॥ सामान्येन रूपेण सामान्यं प्रतिकारणता न विशेषकारणताऽऽपादिकेति शङ्कते— [c]"अथ प्रमात्वे"इति॥ कार्यसामान्यकारणसामान्ययोश्चेन्निरुपाधिः संबन्धस्तदा विशेषयोरपि स वाच्य एवेत्युक्तमावर्तते, इति परिहरति—। [d]"निरुपाधिकत्वेति॥ अत्र विपक्षे बाधकमाह—। [e]"अन्यथे"ति। सामान्यावच्छेदेन यत्कारणत्वं तद्यदि विशेषे न स्यात्तदा व्यक्तिः करणं न स्यादित्यर्थः॥

सू० *अथाऽ[f]न्यचास्तु यद्वा तद्वा करणं, प्रमा(२)विवक्षितजातिविशेषव्यपदेशकं प्रमाणम्। [g]चतस्रः खल्विमाः प्रत्यक्षादिप्रमितयो भिन्नबुद्धिव्यपदेशभाजः, नच प्रमाता प्रमेयं वा तद्भेदहेतुः, प्रमाणानि तु यथायथं चतसृष्वसाधारणानीति भिन्नबुद्धिव्यपदेशनिबन्धनानीति?*। मैवम्। विवक्षितपदं तावल्लक्षणे [c]भाण्डालेख्य(३)मिव, पुरुषेच्छानामनियतविषय-

(१) "यतः" "कल्पनात्"—इत्युक्तिस्त्वस्य (वक्तुः) सरलस्वभावतां सूचयति।
(२) प्रमेति, प्रमायां विवक्षिता ये जातिविशेषाः प्रत्यक्षत्वानुमितित्वादयः तद्व्यपदेशकम्=तद्व्यपदेशहेतुरित्यर्थः। व्यपदेशहेतुरित्युपलक्षणं बुद्धिहेतुत्वस्यापि। (३) "भण्डालेख्यमिव।"—इति तु विद्यासागरसंमतः पाठः तदर्थस्तु यथा भण्डस्य=डिम्भकस्य, आलेख्यं, "पुत्रो न पुत्री।"-इति, विवक्षावशात्पुत्रपुत्र्युभयपक्षेपि योजयितुं शक्यं तथेत्यर्थः।

त्वात् [d]अर्थजत्वस्य साक्षात्कारित्वं प्रतीन्द्रिय... विशिष्टतयाऽर्थस्यापि करणत्वप्रसङ्गात्। [e]आप्ते... कर्तुरपि शाब्दप्रमाजातिविशेषकत्वेनातिप्रसङ्गा...

टी० ॥ ननु करणानिरुक्तावपि प्रमाणं सुवचमेवे... "अन्यत्रे"ति ॥ प्रमाजातिविशेषव्यपदेशकत्वमेव स्फुट... "चतस्त्र" इति । तथाच तादृशासाधारणजातिव्यपदेश... रणत्वं प्रमाणत्वं, भवति हि 'लैङ्गिकी प्रमा' 'शाब्दी प्र... व्यपदेश इति भावः ॥ [c]"भाण्डालेख्यमिवे"ति। य... ख्यं=रेखोपरेखादि(१)सर्वभाण्ड साधारणं, न भाण्डविशेष... तथा पुरुषाधीनविवक्षापि न विशेषिकेत्यर्थः ॥ ननु वि... प्रमाजातीयत्वं साक्षात्कारित्वादिजात्यैव विवक्षितं, ... तत्तदसाधारणकारणत्वेन लक्षणं न भाण्डालेख्यन्याय... त्यत आह—। [d]"अर्थजत्वस्ये"ति । अर्थः=कर्म, तदपि सा... रिज्ञाने करणं स्यात्, तस्यापि व्यपदेशकत्वादित्यर्थः।... णयतिव्याप्तिमुक्त्वा कर्त्तरि चाह=। [e]"आप्ते"ति। ... कर्त्ता, शाब्दीं प्रमां प्रत्यसाधारण्येन विशेषक एवेत्यर्थः।

सू० [a]"वोमित्युत्तरे च पूर्वोक्तमिति । [b]"विवक्षितजा... दौपयिकत्वेन(२)प्रमित्यसमवायिकारणविशेष... माणमि'त्यप्यत एव प्रत्युक्तम् । इति प्रमाक... रुक्तिदूषणानि ।

---

[c]एवं (३)विशेषतोपि प्रमाणलक्षणानि प्रतिवक्त...

---

(१) यद्यपि तत्तद्भाण्डगतं रेखोपरेखादि तत्तद्भाण्ड... रणमेव तथापि रेखोपरेखाशब्देन तन्निर्मिता हस्त्यादेराकारा... ते च सर्वभाण्डसाधारणा एवेति भावः ।

(२) "विवक्षितजातिभेदौपयिकत्वेने"ति. "विशेषका... एवेति ।

(३) ग्रन्थेनैतावताऽखण्डि प्रमातत्करणे तथा ।<br>तत्प्रसङ्गवशात्प्राप्तं प्रत्यभिज्ञाद्यखण्डि च ॥<br>तेन मानादिकस्योक्तौ वादिनां यो दुराग्रहः ।<br>कथास्वावश्यकत्वस्य भञ्जितः खण्डनोक्तिभिः ।

तथाहि,-"प्रत्यक्षमिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारी"त्याहुः(१) ।

टी ॥ नन्वाप्तोपि प्रमाणमेव, कथमन्यथा "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादि"ति पारमर्षं सूत्रमित्यत आह-। [a]"ओमि"ति । किमोमित्यभिधायैव निर्वृतो भवानि"त्यादिना पूर्वमेव बाधकस्योक्तत्वात् । नह्यभ्युपगमाधीनमर्थतथात्वमित्यर्थः ॥ नन्वात्ममनःसंयोगः प्रमित्यसमवायिकारणं, तद्विशेषकं लिङ्गशब्दादिप्रमाणं, तथाच प्रमित्यसमवायिकारणव्यपदेशकं प्रमाणमिति लक्षणमास्तामित्यत आह ।- "विवक्षिते"ति । विवक्षान्तर्भावेणैव तदपि शशशृङ्गालेख्यमिव, किञ्च, अर्थस्य=(कर्मणः)कर्तुश्चाप्तस्य करणत्वप्रसञ्जकमित्यर्थः ॥

[c]"एवमि"ति । प्रमाणसामान्यलक्षणदूषणानि कियन्तितद्विशेषलक्षणेपि बोद्धव्यानीत्यर्थः यद्वा, । "एवमि"ति खण्डनीयत्वमात्रमतिदिशति, तेन "तथाहीत्य"स्य सङ्गतिः ॥

मू० "किमर्थमिदमुच्यते ? किं सजातीयविजातीयव्यवच्छिन्नतत्प्रतीत्यर्थं ?-१ उत साक्षात्कारित्वप्रतीतये तच्चिह्नोपदर्शनमिदम् ?-२ उत व्यवहारार्थम् ?-३ उत प्रत्यक्षादिशब्दप्रवृत्तिनिमित्तावधारणार्थम् ?-४ उतान्यत्किञ्चिदर्थमेव ?-५ । नाद्यः । तथाहि,-किं 'सजातीये'ति प्रत्यक्षत्वेन साजात्यमपेक्षितं ? रूपान्तरेण वा ? नाद्यः, [b]तस्माद्व्यवच्छेदावधेः सजातीया-

इति श्रीमदुदासीनवर्य्य श्रीहरिमुकुन्ददासशिष्येण श्रीहरिरामभिश्रघाशिवभ्योऽधिगतवेदवेदाङ्गादिविविधविद्येन श्रीमोहनलाल-सां० यो० वेदान्ताचार्य्येण प्रणीतायां गर्वप्रदर्शिन्यां सामान्यतः प्रमाप्रमाणखण्डनम् ।

{ खण्डनं प्रतिजानीते श्रीहर्षोऽय विशेषतः ।
मानानां, मानभङ्गार्थं वादिनां मानमानिनाम् ॥ }

(१) प्रथमाध्याये प्रथमाह्निके चतुर्थसूत्रे न्यायाचार्या गोतममहर्षय आहुरित्यर्थः ।

दव्यावृत्तत्वे(१)व्यवच्छेदकत्वानुपपत्त्या व्यावृ स्वीकारेणाव्यापकत्वात् । [c]नापि द्वितीयः, विज यपदोपादानवैयर्थ्यात् । अस्ति हि प्रमेयत्वा सर्वसाजात्यम् । [d]अथ प्रमाणत्वादिना वि साजात्यं विवक्षित्वेदमुच्यते, [e]तर्हि लक्ष्यस्यापि णत्वेन साजात्यात् व्यवच्छेद्यकोटिप्रविष्टतया ग्राह्यताऽभावप्रसङ्गः ।

टी० ॥ लक्षणस्य व्यतिरेक्यनुमानत्वेन परा प्रयोजनं खण्डयितुं विकल्पयति-। [a]"किमर्थ"मिति। तीत्यर्थं = लक्ष्यप्रतीत्यर्थम् ॥ लक्ष्यलक्षणमात्रखण्डनम लक्ष्य एवं प्रमाणमूलत्वादिहैव(२)प्रस्तौति—। [b]"तस्मा यतः प्रत्यक्षात्प्रत्यक्षं व्यावर्तनीयं तत्रैव लक्षणसत्त्वे नुपपत्तिः, असत्त्वे तदव्याप्तिर्लक्षणदोष इत्यर्थः ॥ साजात्यमभिमतमिति खण्डयति—। [c]"नापी"ति। प्रमे दिना सर्वं सजातीयमेव, तथाच कस्योपग्रहाय विजा मित्यर्थः ॥ ननु "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणा सूत्रेण(३)प्रमाणसामान्यं विभक्तं, तथाच प्रमाणत्वेन येभ्योऽनुमानादिभ्यो विजातीयेभ्यः प्रमेयसंशयादिभ्यः नेन लक्षणेन व्यावृत्तं बोध्यते, इति शङ्कते—। [d]"अ प्रमाणत्वेन सजातीयाद्व्यवच्छेदो यदि लक्षणफलं तदा दपि व्यवच्छेद एव स्यादिति परिहरति—। [e]"तर्ही"ति।

मू० [a] * लक्ष्यस्य यत्प्रमाणत्वादिभिः सजातीयं त चछेद्यं, न च लक्ष्यस्य लक्ष्यं सजातीयं, षष्ठ्यर्थ व्यवहितत्वात्?*-इति चेत्, [b]एवं तर्हि लक्ष्या भिन्नाद्व्यवच्छेद इत्येवोच्यतां, कृतं प्रमाणत्व साजात्येन प्रकृतानुपयोगिना वर्णितेन,

(१) प्रत्यक्षलक्षणस्याऽव्यावृत्तत्वे इत्यर्थः । (२) इहैव=प्रत्यक्ष लक्ष्यलक्षणमात्रखण्डनमपि प्रस्तौतीत्यन्वयः । (३) प्रथमाध्याये हिके तृतीयं गौतमीयं सूत्रम् ।

लक्ष्यादन्यत्वं परेषामवगतं तदा परस्मादन्यत्वमपि लक्ष्यस्यार्थादवगम्यत इति सिद्धमग्रत एव लक्षणप्रयोजनमिति वैयर्थ्यमेव स्यात् लक्षणाख्यानस्येति । अस्तु वा विवक्षावैचित्रीवशात्कथमपीदृशमभिधानं, तथापि [d]"न तावदनेन लक्षणेनानवगतेनैव व्यवच्छिन्नप्रतीतिसम्भवः, अतिप्रसङ्गात् । नापि ज्ञातेन, दुरवधारणत्वात् । न तावदिन्द्रियार्थसन्निकर्षोत्पत्तिः प्रत्यक्षा, [e]अप्रत्यक्षविशेषणत्वात् ।

टी० ॥ ननु स्वयमेव न स्वमजानीयं, किंत्वनुमानादिनेति नोक्तदोष इत्याह–। "लक्ष्यस्ये"ति ॥ एवं सति लक्ष्यभिन्नव्यवच्छेदफलकं लक्षणमित्यवोचयतां सजातीयव्यवच्छेदफलकत्वोक्तिरतन्त्रमिति परिहरति–। [b]"एवमि"ति ॥ ननु तथैवास्तु, तावतापि लक्षण सफलमेवेत्यत आह–। [c]"यदा चे"ति । परेभ्यः प्रत्यक्षस्य भेदं विना परेषां प्रत्यक्षाद्भिन्नत्वमनुपपन्नमित्यर्थवशात्सिद्धमेवेतरभिन्नत्वमित्यर्थः । विवक्षा वैचित्र्यं='लक्ष्यभिन्नव्यवच्छेदफलकत्वं समानाऽसमानजातीयव्यवच्छेदफलकत्वं वा लक्षणस्ये'त्यभिधानवैचित्र्यमित्यर्थः ॥ दुरवधारणत्वमेवाह–। [d]"न तावदि"ति ॥ [e]'अप्रत्यक्षे''ति । इन्द्रियस्य तत्सन्निकर्षस्य वाऽप्रत्यक्षतया प्रत्यक्षेण तद्विशिष्टप्रतीत्यनुपपत्तेरित्यर्थः ॥

सू० "नापि कार्येण लिङ्गेन तदनुपपत्त्या वा तदवगमः, [b]ताभ्यां सामान्यतः कारणमात्राक्षेपेण कारणगतानुगतरूपासिद्धा(१)वेकरूपलक्षणाऽसिद्धेः । * [c]'कार्यस्यैकजात्यादेकजातीयकारणसिद्धिः ? *-इति चेत्, [d]तर्हि कार्यगतैकजात्यस्य पूर्वमवश्यप्रत्येतव्यत्वाङ्गीकारे तत एव सजातीयविजातीयव्यवच्छेदप्रती-

(१) कारणगतस्येन्द्रियार्थसन्निकर्षजत्वार्थजत्वादेरनुगतस्य रूपस्याऽपि ह्यसिद्धावित्यर्थः ।

तिरस्तु, कृतमनया पारम्पर्यकुसृष्ट्या([1])।... तावतापि न प्रकृतलक्षणखण्डनं भव,त्यन्याप्ते व्याप्तेर्वाऽनुद्भावनात् * । मैवम्, प्रथमभावित... श्यानुष्ठेयतया वा लघोरुपायात्साध्यसिद्धौ ... चरमभावितयाऽवश्यानुष्ठेयत्वाभावेन च गुरु... प्रवर्तमानस्य तवैवेदं दोषोद्भावनं प्रदीपे... प्रज्वाल्य ([2])तमोनाशाय यतमानस्येव पुंसः ... तस्य दीपान्तरस्य कश्चिद्दोषः, किन्तु तव... पुरुष एव पर्यनुयोज्यः। सर्वसाधनसाधारणोऽयं... यत्सम्भवदेवंविधलघूपायत्वं([3])नाम, स्वरूपा... रिव([4])सर्वप्रमाणानाम् । तस्मान्मा नाम ... व्याप्त्यादिर्दोषः, सामान्यदोषादेवेदं लक्षणं... मिति ।

टी० ननु प्रत्यक्षस्येतरभिन्नत्वेन ज्ञानं लक्षणफलं... तदेव([5])लक्षणे लिङ्गं, तदन्यथानुपपत्तिर्वा लक्षणज्ञाने... आह-। [a]"नापी"ति । यद्वा, साक्षात्कारिजातीयं ज्ञानमिन्द्रि... यार्थसन्निकर्षं स्वकारणमनुमापयिष्यतीत्यत आह-। "... ति ॥ [b]"ताभ्यामि"ति । लिङ्गानुपपत्तिभ्यामित्यर्थः ।...

(१) साक्षात्कारिज्ञानत्वेनेन्द्रियार्थसन्निकर्षजत्वमनुमात... तस्य लक्षणत्वं वक्तव्यमिति पारम्पर्यस्य कुसृष्ट्या (=दुष्टसृष्ट्या)... मित्यर्थः । (२) प्रदीपं प्रज्वाल्य प्रदीपे तमोनाशाय यतमान... इवेत्यन्वयः । (३) सम्भवत्येवंविधो लघूपायो यस्य गुरु... सम्भवदेवंविधलघूपायस्तस्य भावस्तत्त्वमिति विग्रहः । सत्प्रतिपक्ष... सम्भवल्लघूपायोऽपि दोषो बोध्यः । (४) स्वरूपासिद्धि... तोऽसिद्धिः । सा चाऽनुमितौ स्फुटैव । 'इदं रजतमि'ति प्रत्यक्ष... तरूपार्थस्याऽसत्त्वेन, एतद्दुस्तिसदृशी मदीया गौरित्युपमिते... विसदृशयोः सादृश्यावगाहित्वेन, वन्हौ धूमोपपाद्यत्वभ्रमेण ... नुपपत्त्या धूमकल्पनारूपार्थापत्तेरपि वस्तुतोऽनुपपाद्यादनुपपत्ति... नारूपत्वेन च स्वरूपासिद्धिर्बोध्या । (५) तदेव=इतरभिन्नत्वे...

साक्षात्त्वावच्छिन्नकार्यं प्रतीन्द्रियार्थसन्निकर्षत्वेनैव कारणतेति तदेव(१)तेनानुमेयमिति शङ्कते—। [a]"कार्यस्ये"ति ॥ तर्हि साक्षात्कारिज्ञानत्वमेव प्रत्यक्षलक्षणमस्तु; कृतमनुमितलक्षणेने,ति परिहरति[d] ।—"तर्ही"ति ॥ लक्षणदूषणाय प्रवृत्तस्यान्याभिधानमप्रस्तुतमिति शङ्कते—। [c]"नन्वि"ति । प्रथमभावित्वं = लक्षणात् पूर्वमेवोपस्थितत्वम् । अवश्यानुष्ठेयत्वं = लक्षणज्ञानार्थमवश्यानुसरणीयत्वम् । लक्षण(२)दोष एवायं यत्सम्भवल्लघूपायत्वं त्वदकौशलस्थापनमुखेनोद्भाव्यते इति परिहारार्थः ॥

सू० [a]"एतेन द्वितीयोऽपि निरस्तः, साक्षात्कारित्वावगमम-न्तरेण तदवगमानुपपत्तेः; तदवगमाच्चास्य प्रतीता-वन्योन्याश्रयप्रसङ्गः । [b]अस्तु वाऽन्यद(३)पि किञ्चि-दिन्द्रियजत्वे लिङ्गं तथापि तदेव(४) साक्षात्कारि-त्वाविनाभूततया प्रत्यक्षलक्षणमुपन्यस्यतां, सन्निहि-तप्रतिपत्तिकत्वात् । * [c]नच तद(५)वश्यं व्यापकं वक्तव्यं, लिङ्गस्य तद्व्याप्यत्वेनैवोपपत्तेः?-इति चेन्न ।

टी० । 'साक्षात्त्वचिह्नोपदर्शनमि'ति पक्ष दूषयति—। [a]"एतेने"ति । साक्षात्कारित्वेनेन्द्रियार्थसन्निकर्षोत्पन्नत्वमनुमेयं, तच्च "ज्ञातं सत्साक्षात्कारित्वव्यञ्जक"मित्यन्योन्याश्रय इत्यर्थः । यद्यपि साक्षात्कारित्वं प्रत्यक्षमेव तथापीन्द्रियजन्यत्वव्यञ्जकमेवेति भावः ॥ नन्वर्थजत्वेनेन्द्रियजन्यत्वमनुमाय तेन साक्षात्त्वमनुमास्यते, इति नान्योन्याश्रय इत्यत आह—। [b]"अस्तु वे"ति ।

---

(१) तदेव=इन्द्रियार्थसन्निकर्षत्वावच्छिन्नकारणमेव, तेन=साक्षात्त्वावच्छिन्नकार्येण । (२) नन्वेतावतापि ममैव दोषोऽभिहितो न लक्षणस्येत्याशङ्कायामाह-लक्षणेति । (३) अन्यद् = अर्थजत्वम् । (४) तदेव = अर्थजत्वमेव । (५) तद् = अर्थजत्वं प्रत्यक्षस्य लक्ष्यस्यावश्यं व्यापकम् = अनुगतं लक्षणं वक्तव्यं न च भवति, साक्षात्कारित्वलिङ्गस्य अस्य तद्व्याप्यत्वेन = साक्षात्कारित्वव्याप्यत्वेन साक्षात्कारित्वव्याप्येन्द्रियजत्वव्याप्यत्वेन वा तन्न्यूनदेशवृत्तित्वात् किञ्चिदिन्द्रियजत्वमेवानुगतं लक्षणमित्यर्थः ।

तथाचार्थजत्वमेव प्रत्यक्षत्वे लिङ्गमस्तु, व्याप्यव्याप्यस्य व्याप्यत्वा(१)दिति किमिन्द्रियजन्यत्वेनेत्यर्थः। सन्निहितोपस्थितिकत्वं = प्रथमोपस्थितत्वम्। * अर्थजत्वस्येन्द्रियजत्वेन नाभावो गृहीतो, न तु साक्षात्त्वेनेति न वाच्यं *, तुल्यसा(२)कत्वादि,ति भावः॥ नन्विन्द्रियजत्वं सकलप्रत्यक्षव्यापकमिति तदेव साक्षात्कारित्वस्य लक्षणं, नत्विन्द्रियजत्वव्यापकं यल्लिङ्गं तल्लक्षणीभवितुमर्हति, लिङ्गस्य(३) तद्व्याप्यस्यापि सम्भवेन प्रत्यक्षस्य लक्ष्यस्याऽव्यापकत्वादिति "नच तदवश्यमि"ति॥

सू० [a]यत्र लिङ्ग(४)मव्यापकत्वान्नास्ति तत्रेन्द्रियजत्वं प्रमाणाभावात् प्रत्येतुमशक्यत्वेन कथं ततः साक्षात्कारित्वावगमः?। यदा(५)तु क्वचित्प्रत्यक्षे एव प्रमाणाभावादिन्द्रियजत्वमनवधारणीयत्वात् साक्षात्कारित्वव्यापकत्वेनानवगतमपि लक्षणं, किमपराद्धं लिङ्गान्तरेणा(६)व्यापकेन। * [b]यत्र तदिन्द्रियजत्वे लिङ्गं नास्ति तत्र लिङ्गान्तरान्वेष्टव्यम्? *। [c]तथापि तदेवास्तां साक्षात्त्वे लिङ्गं, कृतमिन्द्रियजत्वानुमानपूर्वकं तदनुकल्पनया। * [d]अथ तथालिङ्गद्वयं तत्प्रत्येकमव्यापकतया न लक्षणमिन्द्रियजत्वं तु तथात्वाल्लक्षणं

(१) प्रत्यक्षत्वव्याप्येन्द्रियजत्वव्याप्यार्थजत्वस्य सुतरां प्रत्यक्षत्वव्याप्यत्वादित्यर्थः। (२) सामग्री = इन्द्रियार्थसन्निकर्षादिका। (३) लिङ्गस्य = अर्थजत्वस्य, तद्व्याप्यमात्रस्य = साक्षात्कारित्वव्यापक... साक्षात्कारित्वव्याप्येन्द्रियजत्वव्याप्यमात्रस्य वेत्यर्थः। (४) लिङ्गं = अर्थजत्वम्। तत्र प्रमाणाभावादिन्द्रियजत्वस्य प्रत्येतुमशक्यत्वेन... (५)ननु यत्र प्रत्यक्षजातीयेऽर्थजत्वं लिङ्गं नास्ति तत्र साक्षात्त्वव्या... पकत्वेनाऽनवगतमेव तत् लक्षणं संस्यत इत्यत आह–यदेति। ... कत्वेनाऽनवगतौ हेतुः–'अनवधारणीयतये'ति। (६) लिङ्गान्तरेण = ... जत्वेन।

इति चेन्न, ʻसाक्षात्कारित्वानुमानस्य लक्षणप्रयोजनस्योभाभ्यामेव सिद्धेः, कृतं व्यापकेन तेन(१) । ʻनापि तृतीयः । स ह्येवंरूपः, यद् इन्द्रियार्थसन्निकर्षजनितं तत् ʻप्रत्यक्षमि'ति व्यवहर्त्तव्यमिति । अयमप्यर्थोऽनुपपन्नः, लक्षणस्य ज्ञातुमशक्यत्वात् । साक्षात्कारित्वात्तदवगमे साक्षात्कारित्वमेवास्तु व्यवहारनियमनिदानम्, [g]अव्यवहितप्रतिपत्तिकत्वादित्यावेदितम् ।

टी० ॥ यत्र प्रत्यक्षभागे व्याप्त्यैकरूपेण तेन(२)लिङ्गेन नेन्द्रियजत्वमनुमेयं तत्राव्याप्तिः स्यादिति परिहरति—। [a]"यत्रे"ति ॥ तत्रापि प्रत्यक्षभागे लिङ्गान्तरेणेन्द्रियजत्वमनुमितमिति नाव्याप्तिरिति शङ्कते—। [b]"अथे"ति ॥ ताभ्यां लिङ्गाभ्यामाहत्य (३)साक्षात्त्वमेवानुमीयतां किमिन्द्रियजत्वेनेति परिहरति—। [c]"तथापी"ति ॥ अनुगमाननुगमयोर्विनिगमकत्वमिहेति शङ्कते—। [d]"अथे"ति ॥ इदानीमाशयं स्फुटयति—। [e]"साक्षात्कारित्वे"ति । साक्षात्त्वप्रतीतिमात्रं लक्षणस्योद्देश्यं, तच्च ज्ञातमेवेत्यलमिन्द्रियजत्वानुमानेनेत्यर्थः ॥ व्यवहारसाधकं व्यतिरेकिलक्षणमिति खण्डयति—। [f]"नापी"ति ॥ [g]"अव्यवहिते"ति । साक्षात्त्वेनेन्द्रियजत्वानुमानं, तेन च व्यवहारानुमानमिति परम्परागौरवमित्यर्थः ॥

सू० [a]अत एव न चतुर्थः, [b]कल्पनागौरवदोषश्चाधिकः । नापि पञ्चमः, [c]तादृशस्य दर्शयितुमशक्यत्वात् । [d]एतेन ʻभासमानाकारेन्द्रियसम्प्रयोगजं प्रत्यक्षम'पि निरस्तम् । [e]किञ्च, प्रमाणविशेषलक्षणमिदं प्रमाणलक्षणोपसङ्गृहीतस्य कियतः सङ्ग्राहकं कियतश्च प्रतिक्षेपकं वक्तव्यम् ? प्रमाणलक्षणेन च व्यभिचारिणो

(१) तेन=इन्द्रियजत्वरूपेण लक्षणेन । (२) तेन=अर्थजत्वेन । (३) आहत्य=संभूय ।

(१)निवृत्तिः प्रदर्श्यते, तथा सति यथाश्रुतमि
क्षणं, व्यभिचार्यपि हि भासमानस्य सत्तादेरा
स्येन्द्रियसंयोगादुत्पद्यते । [f]अथ विशेषाभिप्रा
लक्षणं वाच्यं, तथाप्यसङ्गतिः । [g]तथाहि,-किं(
यन्मात्रभासमानेन्द्रियसम्प्रयोगजत्वं विवक्षित
उत यावद्भासमानेन्द्रियसम्प्रयोगजत्वम् ?-२ ।
[h]व्यभिचार्यव्यवच्छेदः,

टी० ॥ [a]"अत एवे"ति । अव्यवहितप्रतिपत्तिकत्वादेवे
[b]"कल्पने"ति । साक्षात्कारित्वजात्यपेक्षया सखण्डस्येन्
र्थसन्निकर्षजत्वस्य प्रवृत्तिनिमित्तत्वकल्पनायां गौरवमित्य
[c]"तादृशस्ये"ति । तादृशस्य लक्षणफलस्य दर्शयितुमशक्य
त्यर्थः । [d]"एतेने"ति । लक्षणफलानिर्देशेनेत्यर्थः । यदि
म्प्रयोगजत्वस्य दुरवधारणत्वेनेत्यर्थः । भ्रमे रजताद्या
सम्प्रयोगाभावात्तद्व्यावृत्त्यर्थं 'भासमाने'ति ॥ 'इदं सद्रज
भ्रमस्यापि भासमानसत्ताकारेन्द्रियसम्प्रयोगजत्वादति
माह—। [e]"किंचे"ति ॥ ननु सत्तादिभासमानोऽप्याकारो न
स्तेन चाकारेण(२)भासमानाकारेन्द्रियसम्प्रयोगजत्वं वि
मिति नातिव्याप्तिरित्याह—। [f]"अथे"ति ॥ विशेषाकार
विकल्पयति—। [g]"तथा ही"ति ॥ [h]"व्यभिचारी"ति ।
लणं विशेषाकारमादाय तथापि भ्रमेऽतिव्याप्तेः,
वास्तवं प्रकारमादायातिव्याप्तेरित्यर्थः ॥

सू० [a]निर्विकल्पासङ्ग्रहश्च । नापि द्वितीयः, विक
त्वात् । तथाहि,-किं भासमानताविशिष्टस्ये
म्प्रयोगः ?-१ उत भासमानतोपलक्षितस्य?-२ ।

(१) व्यभिचारिण इत्यतोऽग्रे "ज्ञानस्य"-इति शेषः ।
किमिति, यत्किञ्चिद्भासमानविशेषाकारेणेन्द्रियसंयोगजन्य
मविकल्पार्थः, यावद्भासमानविशेषाकारेणेन्द्रियसंयोगजन्य
यविकल्पार्थः । (२) तेन चाकारेण = विशेषाकारेण ।
आकारस्तेन सहेन्द्रियसंप्रयोगजत्वमित्यर्थः ।

[b]पूर्वं भासमानत्वाभावात्, [c]कारणस्य च पूर्वभावित्वात् । द्वितीये [d]लटोऽविवक्षितार्थत्वं वा ?-१ विवक्षितार्थत्वं वा ?-२ । नाद्यः । तथाहि,-[e]"यावद्भासमाना([1])कारेन्द्रियसंयोगजमपि भवति 'घटोयमि' ति विज्ञानं, न चात्मनि प्रत्यक्षम्, [f]आत्मनस्तदीयाविषयत्वात्, प्रमाणस्य च विषयनियतत्वात्, यत्र प्रामाण्यं तत्रैव विषये तद्विशेषस्य प्रत्यक्षत्वस्य वक्तव्यत्वात्। [g]अन्यथा पटास्तित्वे 'घटोऽयमि'ति प्रत्यक्षं प्रमाणयतः किमुत्तरम् ? । [h]*नन्विदमुत्तरं([2])घटविज्ञानं न पटे प्रत्यक्षं, न हि तदिन्द्रियसन्निकर्षेणोत्पन्नमिति * । [i]तत्किमात्मेन्द्रियसन्निकर्षजं घटविज्ञानमात्मनि प्रत्यक्षमेव ? ।

टी० ॥ [a]"निर्विकल्पके"ति । तत्र निष्प्रकारकतया भासमानस्याकारस्याभावादित्यर्थः । यद्वा([3]) सविकल्पकोत्पत्तिकाले एव निर्विकल्पोत्पत्तिकाले प्रकारस्य भासमानत्वाभावादित्यर्थः॥ निर्विकल्पकमेवाधिकृत्याह-। [b]"पूर्वमि"ति ॥ ननु तत्रापि निर्विकल्पकेनैव([4])भासमानतावैशिष्ट्यमस्तीत्यत आह-। [c]"कारणस्ये"ति ॥ [d]"लट"इति । शानच्स्थानस्ये([5])त्यर्थः ॥ यस्य भासमानस्येन्द्रियेण सन्निकर्षाद्यज्ज्ञानं जायते तत्तत्र प्रत्यक्षमिति([6])

(१) भासमानेति, यदाकदाचिद् (अहमस्मीति स्वात्मप्रत्यक्षकाले) भासमाना यावन्त आकारा यस्यात्मनस्तेनात्मनाऽन्यकाले मनोरूपेन्द्रियसंयोगजमित्यर्थः । (२) "नन्विदमुत्तरम्"-इति पाठस्तु विद्यासागराद्यभिमतः । (३) ननु सविकल्पकज्ञाने सप्रकारतया भासमानाकारवन्निर्विकल्पकज्ञाने निष्प्रकारतयैवाकारो भासते इति न तदसङ्ग्रह इत्यस्वरसादाह=यद्वेति । (४) 'निर्विकल्पकेने'ति पदं भासमानतावैशिष्ट्यपदैकदेशेन भासमानत्वेनान्वेति तथा च निर्विकल्पकेन भासमानतया सहेन्द्रियस्य वैशिष्ट्यं सम्बन्ध इत्यर्थः । (५) "लटः शतृशानचौ"=इति सूत्रोक्तः शानच् स्थाने यस्य लटस्तस्येत्यर्थः । (६) इति=एवं प्रकारेण, यत्तच्छब्दघटितविशेषोक्तौ लक्षणं पर्य-

विशेषपर्यवसानाय सामान्योक्तावनिष्टं तावदाह-। [a]"...
ति ॥ ननु नेदमनिष्टमित्यत आह—। [f]"आत्मन" इति ...
न्यविषयस्याप्यन्यत्र प्रत्यक्षत्वं स्यादित्यत आह-। [g]"अ...
घटप्रत्यक्षस्यात्मप्रत्यक्षतापादनाय लक्षणस्य विशेषपा...
पक्षिणमङ्गीकारयति—। [h]"नन्वि"ति ॥ एवं स्थिते ...
मापादनमाह । [i]"तत्किमि"ति ॥

सू० [a] * कथमेवं स्यात्, आत्मेन्द्रियसन्निकर्षाद् घ...
स्योत्पादेप्यात्मनोऽनवभासमानत्वात्*-इति ...
[b]"भासमाने'त्यत्र लटोऽविवक्षितार्थत्वपक्षमा...
भवतोच्यते, इति स्मर्त्तव्यम् । अस्ति ह्यात्मनो...
मानत्वं कदाचित्केनचित्, अन्यथाऽप्रमेयत्वप्र...
* [c]'उक्तलक्षणकं स्वविषये प्रत्यक्षं, न त्वन्यत्रा...
इति चेन्न । स्वशब्देन यदि ज्ञानमात्रं विवक्षि...
[d]स दोषस्तदवस्थः । अथ ज्ञानव्यक्तिरपेक्षिता...
लक्ष्यस्वरूपस्यासाधारणतया तत्परित्यागेन ...
स्याऽन्यत्रापि गतत्वादतिव्याप्तिः, [f] व्यक्त...
लक्षणाश्रयस्यैकव्यक्त्यभिहितलक्ष्यीभूताधा...
पत्वाभावात्(१) । * व्यक्त्यन्तरमपि लक्ष्यमे...
क्ष्ये च लक्षणस्य गमनादतिव्याप्तिः *?-इति

टी० ॥ भासमानत्वं विशेषणमपश्यतस्तवेदमापा...
शङ्कते—। [a]"कथमेवमि"ति ॥ लड्योऽविवक्षया ...
विशेषणं त्वयैवापास्तमिति परिहरति । [b] "भास...

---

वसाययितुं सामान्योक्तौ=सामान्यतो यावद्भासमानाकारे...
गजत्वोक्ता,वनिष्टमाहेत्यर्थः । यत्तदोरिह तत्पद...
विशेषवाचकत्वम् । (१) एकव्यक्तावभिहितं यल्लक्ष्यीभूत...
णरूपत्वम्=लक्ष्यतावच्छेदकीभूतधर्मवत्त्वम्, तस्य लक्षणा...
न्तरेऽभावादित्यर्थः । यद्वा, एका या लक्ष्यीभूताऽसाधारण...
भिता तद्रूपतायां अलक्ष्यस्यव्यक्त्यन्तरेऽभावादिति ...

एतदनिष्टभयेन(१)यल्लक्षणं विधेयं तत्रातिव्याप्तिरिति परिहाररहस्यम् । वस्तुतो(२)ऽन्यविषयकप्रत्यक्षस्यान्यत्र प्रामाण्यापादनमेव प्रघट्टकार्थः । आत्मप्रत्यक्षत्वस्य घटप्रत्यक्षेति(३)व्याप्तिर्घटानुमित्यादौ प्रत्यक्षलक्षणातिव्याप्तिर्वा न प्रघट्टकार्थः, उपसंहारविरोधात् ॥ ननु स्वविषयकप्रत्यक्ष(४)स्यैव तल्लक्षणं, तथाचान्यविषयकप्रत्यक्षस्यान्यत्र प्रामाण्यापादनं न सम्भवतीत्याशङ्कते—। "उक्तलक्षणकमि"ति ॥ [d]"स दोष" इति । 'घटोऽयमि'ति ज्ञानस्यात्मनि प्रत्यक्षं स्यादित्ययं दोष इत्यर्थः ॥ एकैव व्यक्तिर्यदि उच्यते तदा व्यक्त्यन्तरातिव्याप्तिरित्याह—। [e]"तदे"ति ॥ अतिव्याप्तिमेव स्फुटयति—। [f]"व्यक्त्यन्तरस्ये"ति ॥

मू० [a]"यदेकत्रासाधारणस्वरूपं लक्ष्यत्वेन निरूप्यते भवता न तदन्यस्वरूपम्, अतः कथं 'तदपि लक्ष्यमि'त्यपिशब्देनानेकं साधारणीकृत्य समुच्चेतुं शक्यं;यदपि साधारणं रूपं तद्व्यक्त्यन्तरव्यवच्छेदकं स्वविषयपदं विशेषणं प्रक्षिपता भवतैवाऽसाधारणीकृतम् । स्वशब्दस्य ज्ञानमात्रार्थत्वे [b]दोषस्योक्तत्वात्, [c]स्वत्वस्य चानुगतस्वरूपस्य निर्वक्तुमशक्यत्वात् । [d]अन्यथाऽन्यव्यक्तिविषयस्यान्यत्र तथात्वापत्तेः(५) । [e]नापि द्वितीयः पक्षः, विकल्पासहत्वात् । किं सम्प्रयोगापेक्षया वर्त्तमानत्वम् ?–१ अथ यत्किञ्चिदपेक्षया ?–२ । [f]प्रथमे विशेषणत्वपक्षान्न विशेष इत्यु-

(१) एतदनिष्टभयेन = भासमानत्वस्य विशेषणत्वे पूर्वोक्तविरोधभयेन, यद् = भासमानत्वोपलक्षितत्वघटितं प्रत्यक्षलक्षणं वक्तव्यं तत्रात्मप्रत्यक्षत्वस्य घटप्रत्यक्षे, घटप्रत्यक्षस्य वा घटानुमित्यादावतिव्याप्तिरित्यर्थः । (२) नन्वेवं सति "अत एवात्मविषयत्वानुयोगवत् चिप्रत्यक्षवादिनि पटज्ञानस्य घटादौ प्रत्यक्षतया प्रामाण्यानुयोगो द्रष्टव्यः"—इत्यग्रिमोपसंहारविरोधः स्यादित्यस्वरसाद्वास्तविकं सिद्धान्तमाह—वस्तुत इति । (३) घटविषयकप्रत्यक्षस्यात्मविषयकप्रत्यक्षत्वापत्तिरित्यर्थः । (४) स्वविषयकप्रत्यक्षस्य = स्वविषयविषयकप्रत्यक्षस्येत्यर्थः । (५) तथात्वापत्तेः = प्रामाण्यापत्तेः ।

क्तदोषापत्तिः। द्वितीये तु लटोऽविवक्षितार्थं स्यात्, [g]व्यवच्छेद्ययोर्भासितभासिष्यमाणयो- दा(१)भासमानत्वस्वीकारात्। * [h]इन्द्रियसं- नन्तरं भासमानत्वमपेक्षितम्, अतो विर्वा- त्वम् * ?-इति चेन्न।

टी० ॥ [a]"यदेकत्रे"ति। स्वपदमहिम्ना व्यक्तिविशे- पस्थितौ 'व्यक्त्यन्तरमपि लक्ष्यमेवे'ति त्वदभिधानक- त्यर्थः॥ [b]"दोषस्ये"ति। घटप्रत्यक्षस्यात्मनि प्रामाण्य- लक्षणस्येत्यर्थः॥ [c]"स्वत्वस्य चे"ति। स्वत्वमपि(२)हि अन्यथा तत्प्रत्यक्षानुपग्रह,स्तथा च स्वत्वे यदि तदेव तदात्माश्रयः। स्वत्वान्तरं चेत्तदानवस्था, स्वत्वाद्यं- न्तरं नास्त्येवेत्यर्थः॥ ननु मा भूत्स्वत्वमनुगतं, किमत आह-। [d]"अन्यथे"ति॥ 'भासमाने' त्यत्र लडर्थविवक्षा- यति-। [e]"नापी"ति॥ [f]"प्रथमे" इति। निर्विकल्पके- नताविशिष्टेनेन्द्रियसंयोगजत्वाभावात् तदनुपग्रह [g]"व्यवच्छेद्ययोरि"ति। ज्ञानान्तरे भासितस्य भाविष्य- त्मन इन्द्रियसंयोगजे घटोयमिति ज्ञानेप्यात्मप्रत्यक्ष- रित्यर्थः॥ [h]"इन्द्रिये"ति। तच्च निर्विकल्पकेप्य(३) तदनुपग्रह इत्यर्थः॥

सू० [a]आत्मनोपीन्द्रियसंयोगानन्तरं भासमानत्व- नहि स यदा मनसा गृह्यते तदा [b]नेन्द्रियसं- न्तरम्(४)। * नेन्द्रियसंयोगमात्रं विवक्षितं,

(१) तदा = तत्कालापेक्षया तत्कालीनेन्द्रियसंयोगापेक्षं (२) स्वविषयकप्रत्यक्षरुपैव लक्षणत्वे स्वयमपि किञ्चिदाह स्व- स्वत्वमपीति, यथा स्वपदार्थता घटपटादीनामेवं स्वत्वमपि एवेत्यर्थः। अन्यथा = स्वत्वस्य स्वपदार्थताऽनङ्गीकारे, स्वत्व- विषयकप्रत्यक्षत्वाभावादव्याप्तिः स्यादित्यर्थः (३) यद्यपि निर्वि- सविकल्पके इव भासमानत्वं तथापि किञ्चिद्रूपेण भासमानत्व- तदुक्तम्। (४) 'भासमानत्वम्,-इति शेषः। यद्वा 'अनन्तर- प्रधानो निर्द्देशः, आनन्तर्यमित्यर्थः।

यदनन्तरं भासमानतोत्पत्तिः ? *-इति चेन्न, [c]तदनन्तरमपि भासमानतोत्पत्तेः । *- [d]भासमानतान्तरं तत्, नत्विदं भासमानत्वम् * ?—इति चेत् [e]न, अव्याप्तिप्रसङ्गात्, एकभासनमात्रव्यवस्थितत्वाल्लक्षणस्य । * अथ मन्यसे-यद्भासनं यस्य विषयस्येन्द्रियसंयोगादुत्पन्नं तत्तत्र प्रत्यक्षं प्रमाणमिति निरुक्तौ न दोषः * ?-इति, [f]नैवम् । यद्भासनं 'घटोऽयमि'ति, यस्य विषयस्यात्मन इन्द्रियेण सह सन्निकर्षादुत्पन्नं तद्भासनं तस्मिन्नात्मनि प्रमाणं स्यात् ।* नात्मा तस्य विषयः, तत्कथमेवं स्यात् * ?-इति चेत्, नहि भवता तदीयविषयस्येत्युक्तं, किन्तु सामान्यतो विषयस्येति, तेनेद(१)मभिहितम् । यदि तु तदीयताविशेषणमुपादत्ते भवान् तदा यदि तच्छब्देन ज्ञानजातीयमात्रपरामर्शस्तदा स दोषस्तदवस्थः ।

टी०॥ अविशेषितेन्द्रियसंयोगानन्तरं भासमानतया पर्वदोषानुवृत्तिरित्याह—। [a]"आत्मन" इति । ननु भासमानतोत्पत्तिप्राक्कालत्वेनेन्द्रियसन्निकर्षो विशेष्य इति शङ्कते—। [b]"नेन्द्रिये"ति ॥ विशेषकत्वेन यदभिमतं तदपि साधारणमेवेति परिहरति—। [c]"तदनन्तरमि"ति ॥ इदन्तया विशिष्यमाणं भासनं न साधारणमिति शङ्कते—। [d]"भासमाने"ति ॥ इदन्तागर्भलक्षणमेकव्यक्तिविश्रान्तमित्यव्याप्तिरिति परिहरति—। [e]"ने"ति ॥ यत्तद्विषयशब्दानां साधारण्यात् पूर्वदोषानतिवृत्तिरेवेत्याह—। [f]"नैवमि"ति ॥

मू० यदि तु ज्ञानव्यक्तिविशेषपरामर्शस्तदाऽव्यापकत्वं, प्रतिज्ञानं तच्छब्दार्थस्य भेदात् । नहि यत्त्वं तत्त्वं वा किञ्चिदनुगतं रूपमस्ति । [a]अत एवात्मविषयत्वा-

(१) इदम्—अतिव्याप्तिरूपं दूषणमित्यर्थः ।

नुयोगवत् त्रिपुटीप्रत्यक्षवादिनि पटज्ञानस्य
प्रत्यक्षतया प्रामाण्यानुयोगो द्रष्टव्यः । तदर्थे
'यदिन्द्रियसन्निकर्षोत्पन्नमि'ति विशेषणप्रयो
च्छेदस्यासाधारणादव्याप्त्यापत्तेः । यदि तु
च्छेदार्थोनुगतः स्यात्, पुनरप्यन्यत्र 'घटो'
ति ज्ञानस्य प्रत्यक्षत्वेन प्रमाणता प्रसज्येत । अ
"ऽऽत्मव्यतिरिक्ते" इति विशेषणं प्रक्षिपसि,
त्मविषयस्य प्रत्यक्षता न स्यात् । 'तच्छेदे
तार्थाभिधाने व्यवच्छेदकत्वाभावाद् घटज्ञान
प्रत्यक्षतया प्रामाण्यं प्रसज्येत । एतेन "इन्द्रि
सन्निकर्षोत्पन्नमव्यभिचारि प्रत्यक्षमि"त्यत्रापि
षोऽयमुक्तो द्रष्टव्यः, तादृशस्यापि ज्ञानस्य वि
न्तरे प्रत्यक्षत्वेन प्रामाण्यप्रसङ्गात् ।

टी० ॥ ननु घटप्रत्यक्षमात्मनि प्रमाणमेव, तस्य
मातृमेयात्मकपुटत्रयगोचरत्वा,दिति नेदमनिष्टं प्रामा
इत्यत आह–। [a]"अत एवे"ति । यत्तदादिसाधारण
घटप्रत्यक्षस्य पटादौ प्रामाण्यं तन्मतेपि प्रसक्तमेवेत्यर्थः
यज्ज्ञानं यस्यात्मव्यतिरिक्तस्येन्द्रियेण संयोगादुत्पन्नं त
तत्र प्रत्यक्षमिति विवक्षिते न्यायमतेपि न दोष इत्याशङ्क
[b]"अथे"ति । तद्(२)आत्मव्यतिरिक्ते विषये प्रत्यक्ष
शङ्का ॥ उभयमतसाधारणं(१) परिहारान्तरमाह–। [c]
ने"ति ॥ [d]"दोषोयमि"ति । अन्यप्रत्यक्षस्यान्यत्र प्रा
पादनरूप इत्यर्थः ॥

सू० * यस्यार्थस्य सन्निकर्षाद्यदुत्पद्यते तत्तत्र प्रत्य

( १ तदर्थम्=अन्यविषयकप्रत्यक्षस्यान्यत्र विषये प्रामाण्य
वारणार्थम् ॥ ( २ ) तद्=यज्ज्ञानं यदिन्द्रियसंयोगादुत्पन्नं त
प्राथमिकौत्थानिकशङ्कायामात्मव्यतिरिक्तत्वविशेषणं
त्तमिदानीं तु लक्ष्यकुक्षाविति पूर्वस्माद्विशेषः ॥

प्रमाणम् * ?–इत्यभिधाने तु यच्छब्दतच्छब्दसाधारणासाधारणार्थाभिधाने [a]विकल्पोक्तदोषप्रसङ्गः । [b]अव्यभिचारिपदं च व्यर्थं, न हि शुक्तौ रजतज्ञानं रजतेन्द्रियसन्निकर्षादुत्पन्नम् । * [c]संस्कारलक्षणप्रत्यासत्तौ रजतेऽप्यस्ति ? *–इति चेन्न, रजतत्ववैशिष्ट्ये पुरोवर्तिन([2])स्तदभावात् तस्मिन्नेवांशेऽप्रामाण्यं, नतु रजतत्वमात्रे, तस्यान्यत्र सत्त्वात् । [d]अथ साक्षात्कारित्वं प्रत्यक्षलक्षणमुच्यते [e]तदा साक्षात्कारिविभ्रमेपि प्रसङ्गः । * [f]अथाऽव्यभिचारित्वविशेषितं तल्लक्षणमिति वा भेदाग्रहव्यतिरिक्तविभ्रमाभावो वा( ) * ?–इति चेन्न, विकल्पासहत्वात् । किमवगतमिदं लक्षणं [g]फलहेतुः ? अनवगतं वा ? । तावच्चरमः, तदभिधानवैयर्थ्यप्रसङ्गात्; अभिधानस्य ज्ञानोत्पादोपयोगित्वात्, तस्य चानवगतस्यैव फलसाधकत्वाभ्युपगमात् । आद्ये किमन्यस्मादवगमः ? उत त्वदीयाल्लक्षणवाक्यात् ? । यद्यन्यस्मात्, कृतममुना लक्षणाभिधानप्रयासेन, अभिधानस्यास्य ज्ञानोत्पादातिरिक्तप्रयोजनाभावात्, तस्य चान्यत एव सिद्धेः । अन्त्ये किं त्वदभिधानमाप्तोपदेशतया साक्षात्कारित्वं बोधयति ? उत लिङ्गादिभावेन ? । न तावच्चरमः, [h]त्वद्वचनस्य साक्षात्कारित्वाविनाभावादेर्दर्शयितुमशक्यत्वात् । नापि प्रथमः, वादिनं प्रति

(१) प्राभाकरनैयायिकोभयमतसाधारणमित्यर्थः । (२) पुरोवर्त्तिनः (=पुरोवर्तिशुक्तिनिष्ठे) रजतत्ववैशिष्ट्ये तदभावात् (=संस्कारलक्षणप्रत्यासत्तोरप्यभावाद्) –इत्यन्वयः । (३) "यथा मंस्यते, तथा च नातिप्रसङ्गः" –इति शेषः ।

भवत आप्तत्वासिद्धेः। सिद्धौ हि प्रतिज्ञामा साध्यसिद्धेर्हेत्वाद्यभिधानमनर्थकं सर्वत्र स्यात्

टी० ॥ a"'विकल्पे"ति । साधारण्येऽन्यप्रत्यक्ष प्रामाण्यम् । असाधारण्ये प्रत्यक्षान्तरानुपग्रह इत्यर्थः। दतत्पदपूरणे दोषान्तरमाह-। b"'अव्यभिचारी"ति॥" रे"ति । अत एव नाननुभूतमारोप्यते इत्यर्थः। यदा(१)ते तत्र संस्कारो यत्र संस्कारो न तदारोप्यमिति न संस्का प्रत्यासत्तिरिति परिहारार्थः ॥ योग्यव्यक्तिवृत्तितया साधारणं(२) च साक्षात्त्वमिति तदेव प्रत्यक्षलक्षणमिति श d"'अथे"ति ॥ विभ्रमेप्यनुव्यवसायेन साक्षात्त्वप्रतीतेस्त व्याप्तिमाह-। e"'तदे"ति ॥ न्यायमते प्रमान्यत्वेन विशेष मते तु सर्वयाथार्थ्यादविशिष्टमेव लक्षणमिति शङ्कते-। f"अथे g"'फले"ति । इतरव्यवच्छेदो व्यवहारो वा यत्फलं त त्यर्थः ॥ h"'त्वद्वचनस्ये"ति । त्वद्वचनं न साक्षात्कारित्वा भूतं, न वा पक्षधर्म्मं, इति तेन तदनुमानमनुपपन्नमि i"'भवत" इति । लक्षणवादिन इत्यर्थः ॥

सू० a अथ मन्यसे, * यः साक्षात्कारित्वमन्यतो जा प्रत्यक्षव्यवहारनिदानतया च न जानातीति तं प्रत्यक्षव्यवहारनिदानत्वमस्य ज्ञाप्यते लक्षण ना, तच्चानुमानभावेनैव, नाप्तोपदेशतया, अ च लक्षणं केवलव्यतिरेक्यनुमानमाचक्ष्महे; तथ श्रावणादिप्रमितयः साक्षात्कारिप्रमितयो वा सत्वेन व्यवहर्त्तव्याः, साक्षात्कारिप्रमितित्वा यत् प्रत्यक्षतया व्यवह्रियते न तत् साक्षा यथाऽनुमितिः, तथा चैताः, तस्मात्तथा। एतद

(१) यद् = रजतत्ववैशिष्ट्यम् आरोप्यं न तत्र संस्कारः रजते संस्कारो न तदारोप्यमिति न संस्कारस्तत्र(= रजत प्रत्यासत्तिरित्यर्थः ॥ (२) साधारणम्-निखिललक्ष्यप्रत्यक्षव्यक्ति

नप्रतिपादकं च वाक्यं नाप्तवाक्यत्वेन प्रयुज्यते वादिना, किन्तु व्याप्त्यादेः प्रतिपन्नस्यैव स्मारकं पूर्वाप्रतिपन्नस्य वा जिज्ञासोत्पादनद्वारेणेदानीमेव (१)वादिनि प्रमाणोत्पादकमित्युक्तदोषानवकाशः * -इति। न। "प्रत्यक्षतया व्यवहर्त्तव्याः"-इति व्यवहारस्य किं [b]विषयभेदो विशेषः? उत शब्दभेदः?। आद्ये, [c]यद्यसौ विषयविशिष्टव्यवहारं नाज्ञासीत्, कथं साक्षात्कारिणि तस्यस्वकर्त्तव्यतां(२)लक्षणवाक्यादप्यवगच्छेत्। नह्यविदिताग्निरनुमानादप्यग्निसंबन्धं बोधयितुं शक्यः। अथाऽज्ञासीत्, [d]तदा ज्ञातज्ञापनवैयर्थ्यात् लक्षणरूपमनुमानं निष्प्रयोजनम्। * अथ सामान्यतो जानात्यस्ति कश्चिद्विषयः प्रत्यक्षव्यवहारस्य, विशेषतस्तु न जानाति, तं प्रतीदमुच्यते? * । न। किं सामान्यतो निमित्तवत्तां व्यवहारमात्रस्य जानाति? उत व्यवहारविशेषस्य?। आद्ये [e]प्रकृतानुपयोगः, व्यवहारविशेषस्य चिन्त्यमानत्वात्। द्वितीये किंकृतोऽयं व्यवहारस्य विशेषः?-इति विकल्पितपक्षानुप्रवेशमन्तरेण न निस्तारः। एतेन सर्वस्यैव। लक्षणस्य स्वीकारः परासनीयः। तथाहि,—

नाऽत्यापत्त्या प्रमामात्रात्ते तेऽर्थाः स्वीक्रियोचिताः।
[f]तद्धियस्तदुरीकारे स्वाश्रयं कश्चिकित्सतु ॥ ३५ ॥

टी० ॥ ननु लक्षणवाक्यमाप्तवाक्यत्वेन नोपयुज्यते, किन्तु

(१) इदानीमेव = अनुमानवाक्यप्रयोगकाले एव। वादिनि = प्रतिवादिनि, श्रोतरीतियावत्। प्रमाणोत्पादकम् = प्रमीयतेऽनेनेति प्रमाणं तथा मिज्ञानं तदुत्पादकमित्यर्थः॥ (२) स्वकर्तव्यताम् = स्वकृतिजनकेच्छाजनकज्ञानेन ज्ञेयताम्, ज्ञानस्य कृतिसाध्यत्वाभावात्॥

परार्थानुमानत्वेन, तस्य(१) च पूर्वानुभूतव्याप्तिस्मारकत्वं सोत्पादकत्वमात्रं वा फलं, तथा च नोक्तदोष इति शङ्कते-थे"ति ॥ b"विषयभेद" इति । प्रत्यक्षत्वलक्षणो व्यवहार (२)प्रत्यक्षशब्दाभिधेयत्वमात्रं वा व्यवहारविशेषः? इति त्पार्थः ॥ 'व्यवहर्त्तव्या' इतिप्रैषात्(३) व्यवहारविशेषं त कर्त्तव्यतयानुमापयेद्यद्यसौ प्रतीतचरः स्यादन्यथा साध्या व्याप्त्यग्रह एवेत्याह—। c"यद्यमावि"ति ॥ सिद्धसाध d"तदे"ति ॥ विषयविशेषाङ्कितव्यवहारकर्त्तव्यत्वे साध्ये न्यज्ञानमतःऽन्नमित्याह—। e"प्रकृते"ति । अत्यापत्तिः सङ्गः, पटप्रमातोऽपि घटप्रसिद्धिलक्षणः ॥ घटविशेष घटसिद्धौ विशिष्टप्रविष्टात् घटादपि घटसिद्धिरित्या इत्याह—। f"तद्धिय" इति ॥

मू० a"अथान्यः स विशेषश्चेत्तद्धीत्वं कश्चिदिष्यते।
b"दत्तः साकारवादाय विघ्नः(४) स्पष्टमेव तत्
c"अर्थादुत्थास्नवो(५)धर्म्मो नानुमात्वादयो य
तद्धीत्वमपि तद्वत् स्या(६)दित्यर्थोऽनर्थमाविशे
d"सोपि(७)वा धीविशेषः किं स्वीकार्य्यस्तद्धियं वि
एवं च सोपि सोपीति नान्तः सोपानधावने ॥३८॥
e"समस्त(८)लोकशास्त्रैकमत्यमाश्रित्य नृत्यतो

(१) तस्य = परार्थानुमानस्य ॥ (२) व्यवहारस्य त्वाभिवदनात्मकत्वाभ्यां द्वैविध्याद् "व्यवहर्तव्याः"-इत्यत्र व्यवहारमादाय तस्य विषयः प्रत्यक्षत्वलक्षणो ग्राह्यः? उत भिधेयतामात्रमादायेत्यर्थः ॥ (३) प्रैषः = विधिः ॥ (४) आसनम् ॥ (५) उत्थास्नवः = उत्थानशीलाः । (६) तद्धी अर्थादुत्थितं न स्यादित्यर्थः ॥ (७) सोपि धीविशेषः=घटधी तद्धियं घटधीविषयकधियम् विना स्वीकार्यः ? "नैव इत्यर्थः, एवं च सोपि सोपि घटधीधीगोचरधीविशेषादिरपि चरधियं विना नैव स्वीकार्य्य इति सोपानपरम्पराधावनेऽवसा (८) पूर्ववादी शङ्कते-समस्तेति । तत् = तस्मात् समस्तलोक कमत्यमाश्रित्य नृत्यतोः = भासमानयोस्तत्तद्वस्तुव्यवहारत रयोः का गतिरस्तु इत्यर्थः ।

का तदस्तु गतिस्तत्तद्वस्तुधीव्यवहारयोः ? ॥ ३८ ॥
उपपादयितुं(१)तैस्तैर्मतैरशक्नीययोः ।
अनिर्वक्तव्यतावादपादसेवागतिस्तयोः ॥ ४० ॥

नापि(२)द्वितीयः । तथाहि,-अयमनुमानार्थः स्यात्, श्रावणादिप्रतिपत्तयः प्रत्यक्षशब्दाभिधेयाः, साक्षात्कारित्वादित्यादिः, सोपि न ।

टी० ॥ ननु घटधीत्वमित्यत्र घटो न विशेषणं येनात्माश्रयः स्यादपि तु घटेन्द्रियसन्निकर्षजे ज्ञाने घटधीत्वं नाम स कश्चिद्विशेषो येन घटसिद्धिरिति शङ्कते-। a"'अथान्य" इति ॥ एवं सति घटोपि ज्ञानाकारप्रविष्टः(३)स्यादिति वा, घटाकारकादाचित्कत्वाद्घटलक्षणविषयसिद्धिरिति वा, साकारवादाभ्युपगमः स्यादिति परिहरति-। b"'दत्त" इति । तथाचापसिद्धान्त इति भावः ॥ ननु नार्थाधीनं घटधीत्वं, किन्त्वनुमितित्वादिवत्कारणान्तराधीनं, तथाच नाकारकादाचित्कत्वात् घटसिद्धिरिति न साकारवाद इत्याह-। c"'अर्थादि"ति । इतिशब्दानन्तरं 'यदा, तदे'त्यध्याहार्य्यम् । अर्थो घटादिरनर्थं = सङ्कटं प्रविशेन्न सिद्ध्येदित्यर्थः । अर्थानधीनघटधीत्वस्यार्थं प्रत्यतन्त्र-

(१) सिद्धान्ती समाधत्ते-उपपादयितुमिति । तैस्तैर्मतैरुपपादयितुमशक्नीययोस्तयोः ( = तत्तद्वस्तुधीव्यवहारयोः ) अनिर्वक्तव्यतावादपादसेवागतिः-इत्यन्वयः । (२) 'प्रत्यक्षतया व्यवहर्तव्याः' इत्यत्र प्रत्यक्षशब्दाभिधेयत्वमात्रं व्यवहारविशेषो ग्राह्य इति द्वितीयं पक्षं खण्डयति-नापीति । (३) यदि बाह्यार्थवादी नैयायिकादिरास्तिकः शङ्ककस्तदा तं प्रति "ज्ञानाकारप्रविष्टः स्यादि"ति प्रसञ्जनम्, यदि तु विज्ञानवादियोगाचारः शङ्ककस्तदा तं प्रति "घटलक्षणविषयसिद्धिरि"ति प्रसञ्जनमिति विभागः । तत्र घटधीत्वस्य घटधियां वृत्तित्ववत्तद्विशेषणीभूतघटेपि वृत्तित्वेन घटस्य घटधीरूपज्ञानरूपे प्रविष्टत्वम् । तथाच-घटाकारस्य घटधीत्वस्य कादाचित्कत्वेन घटात्मकविषयनियतत्वं वक्तव्यम् ( अनियतत्वे हि घटधीत्वस्य सार्वदिकत्वप्रसङ्गः ) इति घटाकारकादाचित्कत्वान्यथानुपपत्त्या तदतिरिक्तस्य घटरूपविषयस्य सिद्धिरिति द्रष्टव्यम् ।

त्वा(१)दिति भावः । यद्यपि(२)घटप्रमातोऽन्या न घटं किन्तु घटप्रमैव स्वरूपमती घटसिद्धि,स्तथापि विशेषाभावे घटसिद्धिरेव किं न स्यादिति हृदयम् ॥ यद्वा, अनेनैवानुभवे d"सोपी"ति । 'घटधीर्घटसिद्धिरि'ति तद्गोचर(३)ज्ञाना वाच्यमिति तत्रतत्र प्रसङ्गेऽनवस्थेत्यर्थः ॥ व स्तुगोचरयो रयोः सर्वेषां लोकानां शास्त्राणां च सम्प्रतिपत्तिमात्रं, वि तयोरुपपादनमशक्यमित्याह—। c"समस्तेति ॥

मू० यद्यसाक्षात्कारिण्यनुमानादौ तच्छब्दाप्रयोग (४)साक्षात्कारिणि तच्छब्दप्रयोगः क्रियते शशविषाणजबगडदशादिशब्दप्रयोगोपि सा रिणि कर्त्तव्य एवाविशेषात्(५) ।* अथ जबग दिशब्दाः सामान्यतोऽर्थवत्तया न प्रसिद्धाः, दप्रयोगात्; शशविषाणादिशब्दा असद्विषया प्रसिद्धाः, प्रत्यक्षादिशब्दास्तु सद्विषयवत्तया न्यतः सिद्धाः, प्रत्यक्षमस्तीत्यादिप्रयोगदर्शना त्यस्तिविशेषः *, –इति, मैवम्, b एतेनापि षेण चाक्षुषादिशब्दानामव्यवच्छेदात् तेषां क्षात्कारि प्रमामात्रे प्रयोगप्रसङ्गः । * 'सा रित्वे सत्यपि श्रावणादौ चाक्षुषादिशब्दाना गो, न त्वेवं प्रत्यक्षादिशब्दानामिति विशेषः

(१) अर्थं प्रत्यतन्त्रत्वात्=अर्थाऽसाधकत्वात् । (२) ननु घट र्थानधीनत्वेपि घटधीत्वस्य घटधीरूपाऽर्थाधीनत्वमस्त्येव, घट घटसिद्धिः, तथाच तत्साधकत्वे कथं घटाऽसाधकत्वमित्याशङ्क पीति । (३) तद्गोचरेति, घटधीविषयकज्ञानान्तरेण ... तत्रतत्र=घटधीगोचरज्ञानादावपि,प्रसङ्गे=ज्ञानान्तरग्राह्यत्वप्रसङ्गे त्यर्थः । (४) तच्छब्दाऽप्रयोगमात्रात्=प्रत्यक्षशब्दाप्रयोगमात्रात् विशेषात=अनुमानाद्यवाचकत्वस्य शशविषाणादिशब्देपि तुल्य

चेत् [d]एवं तर्हि 'यत्र साक्षात्कारित्वं नास्ति तत्र प्रत्यक्षशब्दप्रयोगो नास्ति, यत्र साक्षात्कारित्वमस्ति तत्र सर्वत्रास्ती'ति यो जानीते तं प्रति लक्षणाभिधानमिति स्यात्,

टी० ॥ अनुमानाद्यवाचकत्वं यदि प्रत्यक्षवाचकत्वे तन्त्रं, तत्राह—।[a]"तर्ही"ति ॥ अथ सद्वाचकत्वे सत्यनुमानाद्यवाचकत्वं, तत्राह—।[b]"एतेनापी"ति । चाक्षुषादिशब्दानामनुमानाद्यवाचकत्वे सति सद्वाचकत्वमस्तीति तेषामपि साक्षात्कारित्वेन प्रवृत्तिनिमित्तेन प्रत्यक्षवाचकत्वं स्यादित्यर्थः ॥ चाक्षुषादिशब्दे साक्षात्वं न प्रवृत्तिनिमित्तं तस्मिन्सत्यपि श्रावणादिप्रतिपत्तौ तदप्रतिपत्तेरिति शङ्कते—।[c]"साक्षादि"ति ॥ एवं सत्यन्वयव्यतिरेकाभ्यामेव तत्पदाभिधेयत्वसिद्धिरिति लक्षणोपन्यासप्रयासवैफल्यमिति परिहरति । [d]"एवमि"ति ॥

सू० स च व्यवहारान्तरवदन्वयव्यतिरेकाभ्यामेव वाच्यवाचकभावमवधारितवानिति व्यर्थं लक्षणम् । [a]एतेनानुमित्यादिव्यवच्छिन्नतया व्यवहर्त्तव्यमित्युक्तानुमानसाध्यतयाभिधीयमानमपास्तं वेदितव्यम् । * पूर्वप्रतिपन्नमेव(१)वाच्यवाचकभावं लक्षणाभिधानेन स्मार्यते?*—इति चेन्न, [b]अवगतसमयस्य(२)प्रत्यक्षशब्दादेव तत्स्मरणसम्भवात् व्यर्थता लक्षणाभिधानस्य स्यात्। [c]अवगतशब्दार्थसंबन्धः शब्दादेव स्मरन् यदि लक्षणेन स्मार्यते; तदा लक्षणवाक्यगतपदकदम्बार्थस्मरणार्थमपि लक्षणमभिधानीयमविशेषाद्, एवं तल्लक्षणवाक्येपीत्यपर्यवसानं स्यात् । *[d]ननु प्रतिवादिनं

(१) पूर्वं प्रतिपन्नो ज्ञातो यो वाच्यवाचकभावस्तं प्रत्येव पुरुषो लक्षणाभिधानेन लक्षणवादिना स्मार्य्यते इत्यर्थः । (२) अवगतो ज्ञातः समयो=वाच्यवाचकतासम्बन्धो यस्य पुंसस्तस्येत्यर्थः ।

प्रति लक्षणाभिधानं नार्थवत्, तेन वाद्याप्तत्वा-
ङ्गीकारात्,किन्तु शिष्यार्थं लक्षणमुच्यते शास्त्रे
हि शास्त्रस्य कर्त्तारमाप्तमेव मन्यते, तस्मात्
प्रत्याप्तवचनत्वेनैव लक्षणवाक्यमर्थं प्रतिपादये-
ति गुरुणा गीयमानं,-[e]यस्त्वया साक्षात्कारित्वेन
प्रतीतः स एव प्रत्यक्षशब्दार्थः(२)?-इति चेन्न।
यदि वादिनं प्रति न शास्त्र[f]किन्तु शिष्यं प्रति
प्रतिज्ञामात्रादेवाप्तवचनात् शिष्यस्यार्थनिश्चयो-
त्पत्तेर्हेत्वाद्यभिधानमनर्थकमापन्नं शास्त्रे। अथ
(३)तत्प्रतिवादिनमपि प्रति शास्त्रे वाक्यं यत्र हेत्वा-
द्युपात्तं, लक्षणवाक्यं तु शिष्यमेव प्रति प्रवृत्तं
प्रतिपन्नशास्त्रकाराप्तभावम्-* इति मन्यसे,

टी० ॥ [a]"एतेने"ति । अन्वयव्यतिरेकसिद्धत्वेनेत्यर्थः ॥
[d]"अवगते"ति । शब्दान्तरवदित्यर्थः ॥ ननु लक्षणाधीनं
त्वस्मरणं प्रयोजकम्, नत्वन्यदित्यत आह-। [c]"अवगते"ति
'वादिनं प्रति भवत आप्तत्वासिद्धेरि"ति पूर्वोक्तं ।
[d]"नन्वि"ति॥ शिष्यं प्रति लक्षणाभिधानप्रकारमाह-[e]"यस्त्व-
ये"ति॥ [f]"किन्त्वि"ति । उपनिषन्न्यायेनो(४)पदेशमात्रं
मस्तु, किं लिङ्गाद्युपदर्शनेनेत्यर्थः ॥

सू० तदप्यनुपपन्नम्, शास्त्रान्तरसाध्यत्वाद स्यात्।
अस्ति शास्त्रं समयस्य ग्राहकं मुनिभिः प्रणीतं
लिङ्गानुशासनव्याकरणादि। यदि च शास्त्रा-
न्ध्योर्यो भवदीयशास्त्रस्य विषय,स्तर्हि प्रवृत्ति-

(१) सः = शिष्यः । (२) अत्रैकमन्यदितिपदम...
(३) अथ यत्र हेत्वाद्युपात्तं तद्वाक्यं प्रतिवादिनं प्रत्यपि
भवत्वित्यन्वयः । (४) उपनिषन्न्यायेन=उपनिषदुपदेशवद्-
भ्युक्तिनिरपेक्षमित्यर्थः ।

यविभागेन साधनमपि शब्दानां कुतो न व्युत्पाद्य व्यवस्थाप्यते? लिङ्गं वा शब्दानां कुतो नाभिधीयते? तदज्ञानेपि पराजयो जायते एव। अथवाऽस्तु व्याकरणादिविषयं विहाय नामव्युत्पादनं कथमपि भवच्छास्त्रविषयः, तदापि न्यूनतरत्वमस्मिन्विषये भवदीयशास्त्रस्य। बहूनि नामानि विद्यन्ते कोशान्तरवर्तीनि, कुतो(१)न व्युत्पादितानीति। *अथास्मिन् शास्त्रे येषांशब्दानामुपयोगस्तेषामनेन व्युत्पादनं, न सर्वेषाम्*-इत्युच्यते तथापि यथैकवाक्यगतस्य पदस्य लक्षणव्युत्पादनम् एवं तल्लक्षणवाक्यगतपदस्यापीत्यपर्यवसानमापतितं शास्त्रस्य, तत्तल्लक्षणवाक्यप्रयोगे एव तेषां तेषां पदानां शास्त्रे जातोपयोगत्वात्। *अथ नानालक्षणप्रणेतॄणां वादिनां विप्रतिपत्तेः प्रत्यक्षादिशब्दाथ एव व्युत्पाद्यते संशयनिरासाय नान्योऽसंशयत्वात् *-इति मन्यसे, तथाप्यनुपपत्तिः। अस्ति हि [c]वादीनामर्थे वाच्यताद्योत्यताविवादः(२), [d]अस्ति च छिदुरादिपदानामर्थे कर्मकर्तृत्वाकर्मकर्तृत्वे विवादः, अस्ति च भावशब्दस्य स्वरूपसत्त्वसत्तासामान्याद्यर्थत्वे(३), अस्ति चाऽधिकरणशब्दार्थस्य पतनप्रतिबन्धकत्वसमवायित्वादौ, एवमन्यस्मिन्नपि बहौ पदार्थे जाग्रति विप्रतिपत्तयः(४) तत्तल्लक्षणानि कस्मान्नोक्तानि?।

(१) 'कुतः'-इत्यतः प्राक्'तान्यपि'-इत्यध्याहरणीयम्। (२) निपातानां वाचकत्वं नैयायिकमते, द्योतकत्वं वैयाकरणमते ज्ञेयम्। (३) भवन्तीति भावाः-इतिव्युत्पत्त्या तत्तद्वस्तुस्वरूपसत्त्वार्थत्वं; भवनं भाव इति व्युत्पत्त्या च सत्तासामान्यार्थत्वम्। भाव इति प्रयोगश्चौरादिकस्य। (४) विप्रतिपत्तयो जाग्रतीत्यन्वयः, "जाग्रति"-इति बहुवचनान्तं क्रियापदम्।

टी०। a"अस्यार्थस्ये"ति। वाच्यवाचकत्वठ्युत्पा... त्यर्थः॥ तदेवाह—। b"अस्ती"ति॥ c"वादीनामि"ति॥ ...ब्दादीनामित्यर्थः॥ d"अस्ती"ति। "विदिभिदिच्छि... त्जि"तिसूत्रविहितकुरच्प्रत्ययस्य कर्मकर्त्तरि कर्तरि भावे... शासनमिति सन्देहः, प्रयोगद्वैविध्यदर्शना(१)दित्यर्थः।। ... यावतां पदार्थानां तत्त्वज्ञानं निःश्रेयसहेतुस्ते एव लक्षण... ज्ञातश्च शास्त्रे निरूपणीयाः, इति नायमुपालम्भो(२)... तथापि तदप्येतावतामेवेति न नियामकमिति भावः।

सू० तदास्तास् aएकत्र विस्तराभिनिवेशः। किञ्च... क्षात्कारित्वम्?। *सविशेषार्थप्रकाशत्वम्?(३)... चेन्न। bसविशेषत्वस्योपलक्षणत्वेऽनुमानादिव्या... cविशेषणत्वे च यदि विशेषशृङ्खलाया d... स्तदा(४)शेषविशेषस्य बोधे प्रत्यक्षलक्षणा... नाऽऽमूलमप्रत्यक्षत्वापातः। यeद्यविश्रान्ति... तादृशस्यैव व्याप्तिग्रहादनुमायामपि तादृशी... रिति साक्षात्कारित्वापत्तिः। *fअथाननुगमा... तदनुमा*, gतर्हि तदनुगतप्रतीत्याद्यनुपपत्तिः...

टी०॥ a"एकत्रे"ति। प्रत्यक्षादिलक्षणमात्रे ... b"सविशेषत्वस्ये"ति। सह विशेषेण रूपित्वादिना ... तार्णत्वादिना वा वर्त्तमानस्य वह्न्यादेरनुमानादिना... रतिव्याप्तिरित्यर्थः॥ विशेषेण सहैव भानं यदि विवक्षित... ह—। c"विशेषणत्वे चे"ति। अनवस्थाभयेन यस्य विशेषस्य... शेषत्वभानं नाभ्युपेयं तत्राप्रत्यक्षतया मूलपर्यन्तमप्रत्यक्षत्व...

(१) छिद्यते यत्राच्छिदुरमितिव्युत्पत्त्या काष्ठादौ, छिनत्तीति... च पुरुषे, छिदुरपदप्रयोगदर्शनादित्यर्थः। (२) अयमुपालम्भ... स्लक्षणानि कस्मान्नोक्तानि"—इत्युपालम्भ इत्यर्थः। (३) विशे... लत्वपृथुबुध्नोदरत्वादिना सहितो योऽर्थो घटादिस्तज्ज्ञानत्वं ... रित्वमिति शङ्कते—सविशेषेति। (४) शेषविशेषस्य=चरमवि... यद्विषयकं विशेषान्तरं नास्ति तस्येत्यर्थः।

विशेषसाहित्येनाऽज्ञानादित्यर्थः ॥ [d]"विश्रान्तिरि"ति । कश्चिद्विशेषो विशेषं विनाकृतोऽपि गृह्यते इत्यर्थः ॥ [e]"अविश्रान्तिरि"ति । सर्वे विशेषाः स्वविशेषसाहित्येनैव भासन्ते इत्यभ्युपगमे व्याप्तिग्राहकप्रत्यक्षे यावद्विशेषभानम् इत्यनुमाने(१)ऽपि तद्भानादनुमितेः प्रत्यक्षत्वापत्तिरित्यर्थः ॥ ननु तावतामनन्तविशेषाणां व्यापकतावच्छेदकैकरूपाभावादनुमितौ भानमनुपपन्नमिति न तत्रातिव्याप्तिरिति शङ्कते–। [f]"अथे"ति ॥ तर्हि तावतामनन्तविशेषाणामनुगतप्रतीतिव्यवहारौ न स्यातामेकरूपाभावादिति परिहरति–। [g]"तर्ही"ति ॥

सू० [a]व्यक्तेरनुमानादसिद्ध्यापत्तेश्च । [b]यथा हि व्यक्तिं विना सामान्यस्य, तथा तावन्तं विशेषं विना [c]व्यक्तेरप्यनुपपत्तावविशेषात् । [d]यदि च प्रतीत्यपर्यवसानाभावात्पक्षधर्मतया नानन्तविशेषसिद्धिरिति मन्यसे, तदा प्रतीता(२)पर्य्यवसानात्तद्बुद्धिः साक्षात्प्रकाशः स्यात् । [e]अप्रतिपद्यमानानन्तविशेषप्रकाशकल्पनातश्चैकाकिसाक्षात्त्वनामकविशेषकल्पनैवाल्पत्वाच्छ्रेयसितरा, साक्षात्कारित्वव्यवहारानुपपत्तेः (कल्पनाबीजस्य) तावता(३)ऽपि चरितार्थत्वात्, इति कृत्वा [f]तत्कल्पनापि नाऽत एव ।

टी० ॥ किंच, सामान्योपग्रहेण व्याप्तिग्रह इत्यनुमितौ सामान्यं भासमानं व्यक्तिमादायैव यथा भासते तथा वह्निरप्य-

(१) अनुमाने=अनुमितौ । अत्रायमाशयः । व्याप्तिग्राहकप्रत्यक्षे वह्नित्वाद्यनन्तविशेषवत एव व्यापकस्य भानात् तादृशविशेषभानधाराया अविश्रान्तेश्च त्वयैवोक्तत्वादनुमितिपर्य्यन्तमपि विशेषभानं वक्तव्यमित्यनुमितेरपि प्रत्यक्षत्वप्रसङ्ग इति । (२) प्रतीतेति, प्रतीताया वह्निव्यक्तेस्तार्णत्वाऽतार्णत्वाद्यनन्तविशेषं विनाऽपर्यवसानाद्=अनुपपद्यमानत्वात्तदुपपादकानामनन्तविशेषाणां बुद्धिः=कल्पनारूपार्थापत्तिः साक्षात्प्रकाशः=साक्षात्कारिज्ञानं स्यादित्यर्थः । (३) तावता=अर्थगतानुगतसाक्षात्त्वकल्पनेनैव ।

नुमितौ भासमानस्तावदनन्तविशेषमादायैव(१)भासते... नसंवित्संवेद्यत्वाभ्युपगमात्, अन्यथा सामान्यमादायैव... पर्य्यवस्येद्व्यक्तिभानं क्वापि न स्यादित्याह–। ª"व्यक्तेरि... एतदेवाह–। ᵇ"यथा ही"ति । सामान्यस्यानुपपत्तिरि... न्वः(२) ॥ ᶜ"व्यक्तेरि"ति । अनुमितौ भासमानाया व... व्यक्त रित्यर्थः ॥ ननु व्यक्तिमनादाय सामान्यबुद्धेर्यथा... सानं न तथा तावदनन्तविशेषमनादाय वह्न्यादिव्य... रपर्य्यवसानं, तावद्विशेषमनादायापि व्यक्तिबुद्धेर्दर्शना... आह–।ᵈ"यदि चे"ति । एवमपि प्रतीता वह्निव्यक्तिस्ताव... विशेषमन्तरेण न पर्य्यवस्यतीति तदनुमित्यनन्तरभावि... लायाते ज्ञानान्तरे(३) प्रत्यक्षलक्षणातिव्याप्तिः स्यादि... किञ्च, तावदनन्तविशेषभानमनुपलब्धिबाधितमित्यवश्य... च्यसाक्षात्त्वव्यवहारानुरोधाद्विषयगतं साक्षात्त्वसामान्य... स्यतां, यद्विषयीकुर्वद्विज्ञानं साक्षात्कारि व्यवह्रियते ॥ ᵉ"अप्रतिपद्यमाने"ति । एकाकि त्वमल्पत्वं च लाघव... दुक्तम् ॥ नन्वस्तु तथा, को दोषः ? इत्यत आह– ᶠ"तस्मा... पी"ति ॥ ᵍ"अत एवे"ति । विषयगतसाक्षात्त्वविषयकार... वतिव्याप्तिदोषादेवेत्यर्थः ॥

**सू० ªविस्तरश्चात्र वक्ष्यते । ᵇविशेषश्च यदि... स्तदा निर्विकल्पकाऽव्याप्तिः । ᶜयदि(४) च... रविश्वव्यावृत्तस्वरूपप्रकाशः, ᵈसोपि तथा... दूरात्सामान्यप्रत्यक्षस्या(५)प्रत्यक्षत्वापत्तिः ।**

(१) तावदनन्तविशेषमादाय=तार्णत्वाऽतार्णत्वादिकव... मादायैव भासेतेत्यर्थः । तत्र हेतुः–तत्समानेति, सामान्य... ग्राह्यत्वाभ्युपगमाद्विशेषस्येत्यर्थः । (२) "अनुपपत्तौ"–इत्य... क्तिविपरिणामेनानुपपत्तिरिति प्रकृतस्य सम्बन्ध इत्युक्तम् ।... पपद्यमानार्थदर्शनाद्दुपपादकीभूतार्थान्तरकल्पनारूपार्थाप... ज्ञाने इत्यर्थः । (४) ननु स्वेतरविश्वव्यावृत्तं स्वरूपं विशे... षकं ज्ञानं प्रत्यक्षमित्युच्यते, तथा च सोपि=निर्विकल्पक... त्यक्षित तथा=स्वेतरविश्वव्यावृत्त इति न तद्विषयके निर्विक... प्तिरित्यत आह–यदीति । (५) सामान्यप्रत्यक्षस्य=सामान्य...

जगद्वैलक्षण्यप्रकाशे संशयाद्यनुपपत्तेः । [f]यदि च तत्रापि प्रतिपन्नादिव्यवच्छेदमात्रप्रकाशाद्विशेषप्रकाशत्वमेव, तदाऽनुमित्यादिव्याप्तिः । अथेन्द्रियकरणकानुभवत्वं(१), तत्र 'साक्षात्कारिधीकरणत्वस्यैवेन्द्रियत्वेनान्योन्याश्रयत्वापत्तिरि'ति केचित् । तन्न, अज्ञातप्रमाकरणत्वस्य(२) [g]भावत्वविशेषितस्य चेन्द्रियत्वनिरुक्तेः सम्भवात् । [h]विना कार्यगतविशेषसिद्धिं, किं प्रति करणत्वमेव ज्ञेयमिति तु बाधः साधीयान् । [i]एतेन 'ज्ञातता काचिद्विलक्षणा, तज्जनकत्वं ज्ञानस्य साक्षात्त्वम्'-इत्यपि निरस्तम्,

टी० ॥ ननु ज्ञानगतमेव साक्षात्त्वमस्तु, तदेव च लक्षणमित्यत आह—। [a]"विस्तरश्चे"ति ॥ 'सविशेषार्थप्रकाशत्वमि'-त्यत्र विशेषपदं विकल्प्य दोषमाह—। [b]"विशेषश्चे"ति । निर्विकल्पके विशेषस्यातद्व्यावृत्तेरभानात्तत्राव्याप्तिरित्यर्थः ॥ ननु व्यवच्छिन्नभानमभिमतं, न तु व्यवच्छित्तिभानमित्यत आह—। [c]"यदि चे"ति ॥ [d]"सोपीति । निर्विकल्पकविषयोपीत्यर्थः ॥ [e]"तदा दूरादि"ति । यदि धर्म्मिमात्रमपि विशेषो वस्तुमात्रं वा विशेषस्तदा धर्म्मिदर्शनं विशेषदर्शनम्, अतस्तत्र संशयो न स्यादित्यर्थः ॥ ननु सकलव्यवच्छिन्नप्रकाशो न लक्षणं, किन्तु व्यवच्छिन्नप्रकाशमात्रं, तच्च दूरप्रत्यक्षेप्यस्तीत्याह—। [f]"यदि चे"ति ॥ भट्टमतेऽनुपलब्धिव्यावर्तनायाह—। [g]"भावत्वे"ति ॥

स्वादेर्धर्मिणः प्रत्यक्षस्य, अप्रत्यक्षत्वापत्तिः, इतरव्यवच्छिन्नस्वरूपस्य तत्राभानात् । तज्ज्ञाने बाधकमाह—तत्रेति ।

(१) अत्र "साक्षात्त्वम्" – इति शेषः । (२) अज्ञातप्रमाकरणत्वस्य=अज्ञातत्वे सति प्रमाकरणत्वस्य ।

स्वयं खण्डनमाह—। [h]"विने"ति ॥ [i]"एतेने"ति । आ
स्याशक्यग्रहत्वेनेत्यर्थः । ज्ञाततावैलक्षण्यं—यतः 'साक्षात्
नि'ति व्यवहार इत्यर्थः ॥

मू० [a]ऐकरूप्याव्यवस्थितौ कारणत्वानवधारणात्।
ज्ञाततावैलक्षण्यान्यथानुपपत्तेरेव [b]तत्सिद्धिः,
णान्तरवैलक्षण्यादेव तदुपपत्तेः। नापि मेयजनि
[d]मतिप्रसङ्गात्। [e]स्वमेयजन्यत्वं च स्वार्थत्वा
मनुगमात्, [f]पूर्वदोषानिवृत्तेश्च। [g]अथ *येन
सति न प्रमितत्सा पुनर्भवति तज्ज्ञानं साक्षा
*-इति, तन्न, [h]प्रत्यक्षावगतेपीष्टे तनयादौ
त्सादर्शनात्। * अथ यदनन्तरं न विजाती
त्सा तद्भावस्तथात्वं*, तन्न, तत्साजात्या
तद्विजातीयत्वानवगतेः, अरिसम्पद्यनुमानादि
यायां प्रत्यक्षयितुमनिष्टेश्च। प्रत्यक्षावगतेपि
रक्ताऽशोकस्तवकसन्देहे धूमदर्शनेन वह्ने
मानत्वादित्य[i]प्येके। * अज्ञायमाना [j]ऽसा
कारणको [k]ऽनुभवत्वं,

टी० ॥ [a]"ऐकरूप्ये"ति । साक्षात्कृतताऽऽधा
ज्ञानम्? इति नाद्यापि निरूपितमित्यर्थः ॥ [b]"तत्सिद्धि
ज्ञानगतैकरूपसिद्धिरित्यर्थः ॥ ज्ञानभिन्नकारणेनापि ज्ञा
लक्षण्यमन्यथोपपन्नमित्याह—। [c]"कारणान्तरे"ति ॥ [d]
सङ्गादि"ति। आत्मना मेयेन सर्वज्ञानजननादित्यर्थः
घज्ञानस्य यन्मेयं (घटादि) तत्तज्जन्यत्वं न लक्षणं, स्व
ननुगमादित्याह—। [e]"स्वमेयजन्यत्वमि"ति ॥ आत्मप्र
त्यात्मा मेय इति तज्जनितत्वं सर्वज्ञानानामित्याह—।

विशेषणतया लिङ्गस्यापि करणत्वमित्यत आह—। [f] "ज्ञाने"ति । तथाचावधावपि तुल्यमित्यर्थः । यद्यपि विशेष्यस्य ज्ञानस्य करणत्वेनुमितावज्ञायमानकरणत्वं गतमेव, तथापि तौल्यमेवेति भावः(१) ॥ ननु तत्र लिङ्गं करणं, तज्ज्ञानं तु व्यापारः, इति नाज्ञायमानकरणत्वमिति शङ्कते—। [g] "असाधारणे"ति । अवधिज्ञानस्य व्यापाराभावाच्च करणत्वमिति वा शङ्कार्थः ॥ भाविनो व्यापारद्वारापि न लिङ्गस्य करणत्वमित्येतदर्थं "भावी"ति ॥ स्वप्रकाशेन ज्ञायमानकरणत्वमनुमानेऽनुपपन्नं, तस्यान्यथासिद्धत्वादित्याह—। "तस्यापी"ति ॥

मू० "अन्यथासिद्धस्यापि ज्ञायमानत्वस्यावर्जने चक्षुराद्यनुमित्यनन्तरं दैवोपजातघटादिप्रत्यक्षाव्यापनात् । * [b] नियमेन ? *—इति चेन्न, [c] विधौ वैयर्थ्यात् । नियमेन [d] निषेधस्य विशेषणे दैवावगतेन्द्रियज्ञानानन्तरजप्रत्यक्षसम्भवादसिद्धिः । * [e] विधौ करणत्वप्रविष्ट एवायं नियमो निरुच्यते ? *—इति चेन्न, [f] तथापि वैयर्थ्यादेव । * [g] अन्यथातिप्रसक्तेरवैयर्थ्यम् ? *—इति चेन्न, [h] तथाप्यतिप्रसक्तेरेव । [i] नहि रसादिसाक्षात्कारे रूपादिर्हेतुः । * [j] अन्यथासिद्धेर्न ? *—इति चेन्न, [k] तुल्यत्वादनुमानेऽपि ।

टी० ॥ अवर्जनीयसिद्धस्य कारणकोटौ प्रवेशेऽनिष्टमाह—। [a] "अन्यथे"ति । तथाचाज्ञायमानकरणकत्वं प्रत्यक्षेपि न स्यादित्यर्थः ॥ अनुमानं नियमेन ज्ञायमानकरणकं, नतु तथा प्रत्यक्षमित्याह—। [b] "नियमेने"ति ॥

(१) अवधिज्ञाने विशेष्यमात्रस्य ज्ञानस्यैव करणत्वं, न विशिष्टस्य अनुमितौ तु विशिष्टस्य करणत्वाङ्गीकारेण विशेषणीभूतलिङ्गस्यापि करणत्वमित्यनुमितावज्ञायमानकरणत्वं गतम्=निरस्तमेवेत्याक्षेपग्रन्थार्थः ; तथापि विनिगमनाविरहादनुमितावपि विशेष्यमात्रे करणत्वस्वीकारे साम्यमेवेति समाधानग्रन्थार्थः । यद्वा, यद्यप्यनुमितौ विशेष्यस्य ज्ञानस्य करणत्वेऽनुमितावज्ञायमानकरणत्वलक्षणं गतं=स्थितमेव, तथापि प्रत्यक्षेपीन्द्रियस्यावधिज्ञानस्य वाऽज्ञायमानस्यैव करणत्वात्तौल्यमित्यर्थः ।

नियमेन ज्ञायमानकरणकमनुमानमिति वा विवक्षितं? नियमेन करणकं प्रत्यक्षमिति वा?। आद्ये आह–। [c]"विधावि"ति। कारणोक्तिलभ्यत्वात्, नियतपूर्ववर्तिन एव कारणत्वादित्यर्थः। त्वाह-।[d]"निषेधस्ये"ति। नियमेनाज्ञायमानकरणकत्वस्य प्रत्यक्षपकत्वमित्यर्थः॥ ज्ञायमानत्वं करणे विशेषणं,नतूपलक्षणमिति पूरणाल्लभ्यते, इत्याह–। [e]"विधौ करणत्वे"ति॥ 'ज्ञायमानकरणाभिधानादेव ज्ञानस्य विशेषणत्वमपि लभ्यते(१)–इति 'नियमेनर्थ्यमेवेत्याह–। [f]"तथापी"ति॥ ज्ञायमानकरणत्वं तु काकतालीदाय प्रत्यक्षेऽतिप्रसक्तमिति तद्वारणार्थमयं प्राप्तानुवाद इत्याह–थे"ति॥ अवर्जनीयसिद्धमप्यादाय यद्यतिप्रसक्तिस्तदाऽन्यथासिद्ध(२)करणं स्यादिति सुतरामतिप्रसक्तिरित्याह–। [h]"तथापी"ति। नमादाय ज्ञायमानकरणकत्वं प्रत्यक्षेपी"त्यपव्याख्यानम्, न्वयात्(३)॥ ननु भवत्वन्यथासिद्धमपि करणमित्यत आह–। अन्यथासिद्धेन(४) ज्ञानेन ज्ञायमानकरणत्वं प्रत्यक्षे, ज्ञायमानकरणकानुभवत्वं नानुमानगामीत्याह–। [j]"अन्यथा लिङ्गज्ञानमपि स्वप्रकाशतया स्वविषयेऽन्यथासिद्धमेव, मानकरणकत्वमतिव्याप्तमेवेत्याह–। [k]"तुल्यत्वादि"ति॥

मू० [a]किञ्च, यत्र निषेधस्तद्गतमैकरूप्यं निरूप्य किमादाय नियमो निरूप्येत, इति कार्यगतैक भिधाय न निस्तारः। [b]विनापि च नियमपदप्र गतैकरूप्यमनिरूप्याऽनिस्तार एव। [c]'ज्ञाय

(१) लभ्यते, 'ज्ञायमाने'ति शानच्प्रत्ययबलादिति भावः।

(२) अन्यद् रूपादिकं रसादिसाक्षात्कारे करणं स्यादित्यर्थः।

(३) "नहि रसादिसाक्षात्कारे रूपादिर्हेतुः"–इत्यन्वयव्यतिरेकाग्रहेरित्यर्थः।

(४) स्वप्रकाशविधया ज्ञानं ज्ञानप्रसाधनेऽन्यथासिद्धम्।

करणमि'ति हि यदि कार्य्यव्यक्ति(१)मभिसन्धाय, तदा तत्पूर्वं प्रतीतानां तत्राकरणत्वं दुरवधारणं, ततस्तज्जातीये तज्जातीयव्यभिचारप्रतिसन्धानेऽवश्यं यतनीयमिति । [d]अथाव्यवहितार्थप्रमात्वं तथा, 'तर्हि किमपेक्ष्याव्यवधानं? किञ्च [f]तत्?–इति वाच्यम् । इन्द्रियमपेक्ष्य तत्(२)असन्निकर्षश्च तदि(३)ति चेत्, तर्हीन्द्रियसन्निकृष्टप्रकाशत्वमिति [g]कुटिलिकार्थः, स चानुपपन्नः, 'स्वविलोचनगोलकानुमानव्याप्तेः । * ज्ञानाजन्यज्ञानत्वं तत्? *–इति चेन्न, ' सविकल्पकविशेषाऽव्यापनात् ।

टी० ॥ यज्जात्यवच्छेदेन नियमेन ज्ञायमानकरणकत्वं निषेध्यं तस्या(४)ऽप्रसिद्धो नियमो दुर्ग्रहः, प्रसिद्धौ च तदेव लक्षणमित्याह–। [a]"किञ्चे"ति ॥ अज्ञायमानकरणत्वमप्यवच्छेदकमन्तरेण प्रत्यक्षे दुर्ग्रहमित्याह–। "विनापी"ति । यद्वा, ज्ञायमानकरणकत्वनिषेधो यत्र स्यात्तत्रानुगतरूपं वक्तव्यमित्यर्थः ॥ व्यक्तिविशेषे(५)ज्ञायमानकरणकत्वं निषेद्धुं न शक्यते, यतो ज्ञायमानेनैव केनचित्करणेन तज्जननसम्भवात्, अत एतज्जातीयं न ज्ञायमानकरणकमेतज्जातीयं च तथा–इत्यन्वयव्यतिरेकाभ्यां ग्राह्य(६)मित्याह–। "ज्ञायमानमि"ति ॥ प्रत्यक्षलक्षणान्तरं शङ्कते–। [d]"अथे"ति । इन्द्रियसन्निकृष्टार्थप्रकाशत्वं साक्षात्त्वमित्यर्थः ॥ एतदेव प्रश्नपूर्वकं विशदयति–। "तर्ही"ति ॥ [f]"तदि"ति । व्यवधानमित्यर्थः ॥ [g]"कुटिलिकार्थे"इति ।

(१) कार्य्यव्यक्तिम्=दैवाज्ज्ञायमानचक्षुरादिकरणकप्रत्यक्षव्यक्तिम् । तज्जातीये=प्रत्यक्षत्वावच्छिन्ने, तज्जातीयस्य=ज्ञायमानकरणत्वावच्छिन्नस्य, यो व्यभिचारस्तत्प्रतिसन्धाने इत्यर्थः ।

(२) तद्=अव्यवधानम् ।

(३) तद्=व्यवधानम् ।

(४) तस्य=जातिरूपस्यावच्छेदकस्य । नियमः=व्याप्तिः ।

(५) दैवाज्ज्ञायमानकरणकप्रत्यक्षव्यक्तिविशेषे–इत्यर्थः ।

(६) ग्राह्यमिति, तथाचाऽवश्यमनुगताऽनतिप्रसक्तरूपग्रहणापेक्षया भाव्यमिति भावः ।

वक्रगत्या पर्यवसन्नोऽर्थ इत्यर्थः ॥ [h] "स्वविलोचने"ति। दीर्घ... त्वेन गोलकस्येन्द्रियसंनिकृष्टत्वादित्यर्थः। स्वपदं स्पष्टार्थम्।... के"ति। ज्ञानपदं(१)यदि सामान्यपरं,तदा निर्विकल्पकज्ञानत्वा... त्यकेऽभावादिसविकल्पके चाऽव्याप्तिः। अथ सविकल्पकपरं, त... मवायादिसविकल्पकाव्याप्तिरित्यर्थः ॥

मू०"एतेन 'विषयान्तरज्ञानाजन्यज्ञानत्वं तदि'ति... सविकल्पकस्याधिकव्यवच्छेदरूपविषयत्वात्, वि... धिज्ञानजन्यत्वात्(२)। '* स्वविषयानन्तर्गता... न्यधीत्वं तत्। नच सप्रतियोगिकार्थप्रत्यक्षा... [d] प्रतियोगिनोपि स्वविशिष्टार्थप्रविष्टस्य तत्... प्रत्यभिज्ञायां प्रत्यक्षविषयत्वोपगमात्; 'अ... त्वेन विशेषणाद्वा (३)*—इतिचेत्तन्न, [f] स्वपदे... कृतत्वात्। [g] कार्यव्यक्तावजन्यताया दुरव... तज्जातीये तज्जातीयव्यभिचारशङ्काग्रहणे च... त्ये पूर्ववत्पतनमिति। * [h] स्वकालावच्छिन्न... साक्षात्त्वम् *—इत्यपि न, स्वार्थाविवेचनात्... नुमानादिव्यवच्छेदः?। * [i] तत्र व्याप्त्यादि... नियतार्थत्वं, यत्रापि(४) चन्द्रोदयसमुद्रवृद्ध्या...

(१) ज्ञानपदम्=ज्ञानाऽजन्यज्ञानत्वमिति लक्षणस्थमन्त्यं ज्ञा... सामान्यपरम्=साधारणज्ञानवाचकम्।

(२) तस्यातद्व्यावृत्तिरूपवैशिष्ट्यावगाहिनः सामान्यविकल्प... कस्तु तज्ज्ञानजन्यत्वात्सविकल्पस्येत्यर्थः। यद्वा, तस्य दीर्घादिपरत्व... ग्रहस्य योऽवधिर्ह्रस्वादिस्तज्ज्ञानजन्यत्वाद्दीर्घादिसविकल्पकस्येत्यर्थः।

(३) तथाच स्वविषयानन्तर्गतार्थज्ञानाजन्याऽप्रतियोगिक... पर्य्यवसितं लक्षणम्।

(४) अयं पूर्णचन्द्रोदयः स्वकालीनसमुद्रवृद्धिमान् चन्द्... न्द्रोदयवदित्यनुमानस्य स्वकालावच्छिन्नार्थबोधत्वमस्तीत्यतिव्याप्ति... पीति। आदिपदेनायं घटो वर्तत इत्याद्यनुमानं ग्राह्यम्। तथाहि... कालीनसमुद्रवृद्ध्याद्यनुमितावपि। तादृशत्वस्य=स्वकालावच्छिन्...

र्थत्वं, तत्रापि व्याप्तिप्रविष्टैव तादृशत्वस्य प्रयोजिका? [a]—इति चेन्न, कथमप्यस्तु [j] तथापि स्वकालावच्छिन्नार्थत्वस्य सम्भवात् ।

टी० ॥ [a] "एतेने"ति । सविकल्पकाव्यापकत्वेनेत्यर्थः । लिङ्गादिनेन विषयान्तरेऽनुमित्यादिजननं निर्विकल्पकेन तु स्वविषये एव सविकल्पकजननमिति लक्षणकर्त्तुरभिमानः । अतद्व्यावृत्तिस्वरूपस्य वैशिष्ट्यस्य विकल्पकविषयापेक्षया विषयान्तरत्वादेतदनुपग्रह इत्यर्थः(१)। यद्वा,ऽवज्ञानजन्यदीर्घादिप्रत्यक्षे ह्रस्वादिव्यवच्छेद एवाधिको भासते इति तदनुग्रह इत्यर्थः ॥ एतदेवाह—। [b] "तदवधी"ति ॥ [c] "स्वविषये"ति । प्रत्यक्षताविषयविषयकज्ञानेन न जन्यते लिङ्गानुपधानपक्षे(२)नुमित्यादिकं तये(३)ति तद्व्यवच्छेद इत्यर्थः ॥ प्रतियोगिनोऽप्यभावज्ञाने भानमस्त्येवेति भावप्रत्यक्षाव्याप्तिरित्याह—। [d] "प्रतियोगिनोपी"ति ॥ प्रतियोगितावच्छेदकमते त्वाह—। [e] "अप्रतियोगित्वेने"ति ॥ [f] "स्वपदेने"ति । स्वपदार्थस्याग्रमादित्यर्थः ॥ वैजात्यमन्तरेण जन्यजनकभावो दुर्ग्रह इति पूर्वदूषणमदिशति—। [g] "कार्ये"ति ॥ [h] "स्वकाले"ति । बोधकालावच्छिन्नस्यार्थस्य तादृशत्वमित्यर्थः ॥ व्यवच्छेदप्रकारमाह—। [i] "तत्रे"ति । यदा धूमस्तदाग्निरित्याकारव्याप्तिग्रहबलायातं स्वकालावच्छिन्नत्वं, नतु विषयस्वभावाधीनमित्यर्थः ॥ बोधकालावच्छिन्नार्थबोधत्वं चन्द्रोदयादिस्थले गतमेवेत्यव्याप्तिरित्याह—। [j] "तथापी"ति ॥

मू० * "नच यज्जातीयमेवमेवेति विशेषः * । साजात्यस्य वैलक्षण्यस्याग्रतः सिद्धौ किमनेन(४), न च तदपीति वक्ष्यते ।

(१) लक्षणखण्डनपरग्रन्थार्थ इत्यर्थः ।

(२) लिङ्गोपहितलैङ्गिकभानवादिमते नियमाल्लिङ्गज्ञानविषयीभूतेनैव लिङ्गेन क्वचनानुमितिर्जन्यते अत उक्तं—लिङ्गानुपधानपक्षे इति ।

(३) स्वात्मकानुमित्यविषयीभूतलिङ्गज्ञानेन जन्यते एवेत्यर्थः ।

(४) अनेन ( = जातिघटितलक्षणेन ) किमित्यन्वयः । न च तदपि साजात्यमपि वक्तीति वक्ष्यते—"अथ ज्ञानस्य जातिभेदः कां भवतु साक्षात्त्वं, तत्रे"त्यादिना ग्रन्थेन

*[b] व्याप्त्यादिकमन्तरेण? *—इति चेन्न, [c] 'तस्यैव... त्वेन स्वकालकथावैयर्थ्यात्। यथा च न तर्हि... वक्ष्यते(१)। [d] यत्तु कश्चिदाह—"स्वप्रकाशनिषेधा... लावच्छिन्नार्थप्रकाशत्वासंभव" इति, तदयुक्त... स्तुतो यः स्वकालस्तस्य विवक्षितत्वात्, वर्तमा... शस्तथेति निरुक्तिपर्यवसानात्(२), [f] वर्तमाना... सर्वनिर्वचनीयत्वात्। तथाचोक्तं,—"सम्बद्धं... च गृह्यते चक्षुरादिना"। [g] तस्मादसदुक्तमेव... *[h] बाधासन्निकर्षेतराऽप्रयुक्तविषयनियमजं ज्ञा... *—इति चेन्न, [i] दोषवशजातसाक्षाद्बोधे तदसम्भ... *प्रमासाक्षात्कारस्तथा? *—इति चेत् [j] न, सा... प्रमेतरयोरविशिष्टतया साक्षात्त्वस्य साधा... निर्वक्तव्यत्वात्;

टी० ॥ ननु तथाप्यनुमितिमात्रे न तथा, यथा प्र... आह—। [a] "नचे"ति ॥ व्याप्त्यादिव्यतिरेकेण बाधकालावच्छि... विवक्षितमिति शङ्कते—। [b] "व्याप्त्यादी"ति ॥ व्याप्त्यादिकम... मानबोधत्वमेव तर्हि लक्षणमस्त्विति परिहरति—। [c] "तस्यै"... तलक्षणे खण्डनान्तरमुपन्यस्य दूषयति—। [d] "यत्त्वि"ति। स्वका... त्वेनार्थबोधत्वं स्वप्रकाशपक्षे(३) सम्भवति, तस्य च निषेधादित्य... लावच्छेदोऽपि न प्रकारत्वेन(४) विवक्षित इत्याह—। [e] "वस्तुत"...

(१) वक्ष्यते "अनुमानादिव्यवच्छेद्यतत्तदसाधारणाकाराऽज्ञ... चेच्चे"त्यादिग्रन्थेन। व्याप्त्यादित्वखण्डनेन वक्ष्यत इति त्वन्ये।

(२) 'स्वकालावच्छिन्नार्थप्रकाशत्वमि'ति प्रत्यक्षत्वनिरुक्तौ 'वर्तमा... था' (= प्रत्यक्षम्)—इति निरुक्तिपर्यवसानादित्यर्थः।

(३) स्वविशिष्टकालविशिष्टार्थप्रकाशकत्वे ज्ञानस्य कालविशे... पि प्रकाशकत्वमिति भावः।

(४) न प्रकारत्वेन विवक्षितः किन्तूपाधितयोपलक्षणतया वेति...

